# LIST OF ABBREVIATIONS

B O I = Ms. belonging to the Baroda Oriental Institute.

C U = Ms. belonglng to the Cambridge University.

A S B = Ms. belonging to the Asiatic Society, Bengal.

R A S B = Ms. belonging to the Royal Asiatic Society, Bombay.

G S T = Guhyasamājatantra (MRI).

गु. स. त. = गुह्यसमाजतन्त्र

H O I L = History of Indian Literature.

गु. भू. = गुह्यसमाजभूमिका

# विषयानुक्रमणिका


| | पृष्ठ संख्या |
|---|---|
| Introductiou in English and Hindi | १-१८ |
| List of Abbreviations | १६ |
| सर्वतथागतसमाधिमण्डलाधिष्ठानपटलः प्रथमः | १-७ |
| बोधिचित्तपटलो द्वितीयः | ८-१० |
| वज्रव्यूहो नाम समाधिपटलस्तृतीयः | ११-१२ |
| गुह्यकायवाक्चित्तमण्डलपटलश्चतुर्थः | १३-१४ |
| समन्तचर्याग्रपटलः पञ्चमः | १५-१६ |
| कायवाक्चित्ताधिष्ठानपटलः षष्ठः | १७-२० |
| मन्त्रचर्यापटलः सप्तमः | २१-२४ |
| चित्तसमयपटलोऽष्टमः | २५-२७ |
| परमार्थाद्वयतत्त्वार्थसमयपटलो नवमः | २८-३० |
| सर्व्वतथागतहृदयसञ्चोदनपटलो दशमः | ३१-३३ |
| सर्व्वतथागतमन्त्रसमयतत्त्ववज्रविद्यापुरुषोत्तमपटल एकादशः | ३४-३९ |
| समयसाधनाग्रनिर्देशपटलो द्वादशः | ४०-४७ |
| समयव्यूहतत्त्वार्थभावनासम्बोधिपटलस्त्रयोदशः | ४८-६३ |
| मन्त्राकर्षणविजृम्भितराजो नाम समाधिपटलश्चतुर्दशः | ६४-७५ |
| सर्वचित्तसमयसारवज्रसंभूतिर्नाम पटलः पञ्चदशः | ७६-९० |
| सर्वसिद्धिमण्डलवज्राभिसम्बोधिर्नाम पटलः षोडशः | ९१-१०२ |
| सर्वतथागतसमयसम्बरवज्राधिष्ठानपटलः सप्तदशः | १०३-११९ |
| सर्वगुह्यनिर्देशवज्रज्ञानाधिष्ठानं नाम पटलोऽष्टादशः | १२०-१३६ |
| समाधिसूची | १४१-१४४ |
| श्लोकसूची | १४५-१७७ |

# श्रीगुह्यसमाजतन्त्रम्

ओं नमःश्रीवज्रसत्त्वाय

## प्रथमः पटलः

एवं मया श्रुतम् । एकस्मिन् समये भगवान् सर्वतथागतकायवाक्चित्त[1]-हृदयवज्रयोषिद्भगेषु[2] विजहार । अनभिलाप्यानभिलाप्यैः सर्वबुद्धक्षेत्रसुमेरुपरमाणु-रजःसमैर्बोधिसत्त्वैर्महासत्त्वैः । तद्यथा । समयवज्रेण च नाम बोधिसत्त्वेन महासत्त्वेन । कायवज्रेण च नाम बोधिसत्त्वेन महासत्त्वेन । वाग्वज्रेण च नाम बोधिसत्त्वेन महासत्त्वेन । चित्तवज्रेण च नाम बोधिसत्त्वेन महासत्त्वेन । समाधिवज्रेण च नाम बोधिसत्त्वेन महासत्त्वेन । जपवज्रेण च नाम बोधिसत्त्वेन महासत्त्वेन । पृथिवीवज्रेण च नाम बोधिसत्त्वेन महासत्त्वेन । अब्[3]वज्रेण च नाम बोधिसत्त्वेन महासत्त्वेन । तेजोवज्रेण च नाम बोधिसत्त्वेन महासत्त्वेन । वायुवज्रेण च नाम बोधिसत्त्वेन महासत्त्वेन । आकाशवज्रेण च नाम बोधिसत्त्वेन महासत्त्वेन । रूपवज्रेण च नाम बोधिसत्त्वेन महासत्त्वेन । शब्दवज्रेण च नाम बोधिसत्त्वेन महासत्त्वेन । गन्धवज्रेण च नाम बोधिसत्त्वेन महासत्त्वेन । रसवज्रेण च नाम बोधिसत्त्वेन महासत्त्वेन । स्पर्शवज्रेण च नाम बोधिसत्त्वेन महासत्त्वेन । धर्मधातुवज्रेण च नाम बोधिसत्त्वेन महासत्त्वेन ।

एवंप्रमुखैरनभिलाप्यानभिलाप्यैः सर्व[4]बुद्धक्षेत्रसुमेरुपरमाणुरजःसमैर्बोधिसत्त्वैर्महासत्त्वै-राकाशधातुसमाध्माते[5]श्च तथागतैः । तद्यथा । अक्षोभ्यवज्रेण च नाम तथागतेन । वैरोचनवज्रेण च नाम तथागतेन । रत्नकेतुवज्रेण च नाम तथागतेन । अमितवज्रेण च नाम तथागतेन । अमोघवज्रेण च नाम तथागतेन ।

एवं प्रमुखैः सर्वाकाशधातुसमाध्मातैश्च तथागतैः । तद्यथा । अपि नाम तिलबिम्बमिव परिपूर्णः सर्वाकाशधातुः सर्वतथागतैः संदृश्यते स्म ।

१ BOI °गुह्यहृदय° । २ An interpretation of this enigmatic expression has been offered by Indrabhūti in his *Jñānasiddhi* (P. 53) – हृदयं ज्ञानं तदेव वज्रयोषित् अभेद्यप्रज्ञास्वभावत्वात् तदेव भगं सर्वक्लेशभञ्जनात् । ३ BOI आप° । ४ ASB & RASB omit । ५ BOI & CU °ध्याते° ।

अथ भगवान् महावैरोचन[1]स्तथागतः सर्वतथागतमहारागवज्रं[2] नाम समाधिं समापन्नः तं सर्वतथागतव्यूहं स्वकायवाक्चित्तवज्रेषु प्रवेश[3]यामास। अथ ते सर्वतथागता भगवतः सर्वतथागतकायवाक्चित्तवज्राधिपतेः परितोषणार्थं स्वबिम्बानि[4] स्त्रीबिम्बान्यभि[5]निर्माय भगवतो वैरोचनस्य कायादभि[6]निष्क्रान्ता अभूवन्। तत्र केचित् बुद्धलोचनाकारेण केचित् मामक्याकारेण केचित् पाण्डरवासिन्याकारेण केचित् समयताराकारेण संस्थिता अभूवन्। तत्र केचित् रूपस्वभावाकारेण केचित् शब्दस्वभावाकारेण केचित् गन्धस्वभावाकारेण केचित् स्पर्शस्वभावाकारेण संस्थिता अभूवन्।

अथ खलु अक्षोभ्यँ[7]स्तथागतः सर्वतथागतकायवाक्चित्तहृदयँ[8]वज्रयोषिद्भगेषुचतुरस्रं[9] विरजस्कं महासमयमण्डलमधिष्ठापयामास।

स्वच्छं च तत्स्वभावं च नानारूपं समन्ततः।
बुद्धमग्नि समाकीर्णं स्फुलिङ्गगहनज्वलम्।
स्वच्छादिमण्डलैर्युक्तं सर्वताथागतं पुरम् ॥१॥

अथ भगवान् सर्वतथागतकायवाक्चित्तवज्राधिपतिः सर्वतथागतमण्डलमध्ये प्रतिष्ठापयामास। अथ खलु अक्षोभ्यस्तथागतः रत्नकेतुस्तथागतः अमितायुस्तथागतः अमोघसिद्धिस्तथागतः वैरोचनस्तथागतः बोधिचित्तवज्रस्य तथागतस्य हृदये विजहार।

अथ भगवान् बोधिचित्तवज्रस्तथागतः सर्वतथागताभिभवनवज्रं नाम समाधिं समापन्नः। समनन्तरसमापन्नस्य च सर्वतथागताधिपतेः अथायं सर्वाकाशधातुः सर्वतथागतवज्रमयः संस्थितोऽभूत्। अथ यावन्तः सर्वाकाशधातुसंस्थिताः सर्वसत्त्वाः सर्वे च तेन वज्रसत्त्वाधिष्ठानेन सर्वतथागतसुखसौमनस्यलाभिनोऽभूवन्।

अथ भगवान् बोधिचित्तवज्रस्तथागतः सर्वतथागतकायवाक्चित्तवज्रसमयोद्भववज्रं नाम समाधिं समापद्येमां महाविद्यापुरुषमूर्तिं सर्वतथागतसत्त्वाधिष्ठानमधिष्ठापयामास। समनन्तराधिष्ठितमात्रे स एव भगवान् बोधिचित्तवज्रस्तथागतस्त्रिमुखाकारेण सर्वतथागतैः सन्दृश्यते स्म।

---

१ BOI, CU & RASB °वज्र°। २ BOI & CU °नय° ३ ASB प्रणिधिस°। ४ ASB °पते पवित्रो वशार्थं खचितानि। ५ ASB °न्यत्र। ६ BOI & CU हृदये। ७ BOI & CU °वज्र°। ८ ASB omits °हृदय°। ९ ASB omits.

अथ अक्षोभ्यप्रमुखाः सर्वतथागता भगवतो बोधिचित्तवज्रस्य[1] हृदयादभिनिष्क्रम्य इदमुदानमुदानयामासुः —

अहो हि सर्वबुद्धानां बोधिचित्तप्रवर्तनम् ।
सर्वताथागतं गुह्यं अप्रतर्क्यमनाविलम् ॥२॥ इति ॥

अथ भगवन्तः सर्वतथागताः पुनः समाजमागम्य भगवन्तं बोधिचित्तवज्रं सर्वतथागतपूजास्फरण[2]समयतत्त्वरत्नमेघैः[3] सम्पूज्य प्रणिपत्यैवमाहुः —

भाषस्व भगवन् तत्त्वं वज्रसारसमुच्चयं ।
सर्वताथागतं गुह्यं समाजं गुह्यसम्भवम् ॥३॥ इति ॥

अथ भगवान् बोधिचित्तवज्रस्तथागतस्तान् सर्वतथागतान् एवमाह । साधु साधु भगवन्तः सर्वतथागताः । [4]किन्तु सर्वतथागतानामपि संशयकरोऽयं कुतोऽन्येषां बोधिसत्त्वानामिति ।

अथ भगवन्तः सर्वतथागताः आश्चर्यप्राप्ताः अद्भुतप्राप्ताः । सर्वतथागत संशयच्छेत्तारं भगवन्तं सर्वतथागतस्वामिनं पप्रच्छुः । यद्भगवानेवंगुणविशिष्टेऽपि सर्वतथागतपर्षदि सर्वतथागतकायवाक्चित्तगुह्यं निर्देष्टुं नोत्सहते तद्भगवान् सर्वतथागताधिष्ठानं कृत्वा सर्वतथागतवज्रसमयसम्भवपदैः सर्वतथागतानां सुखसौमनस्यानुभावनार्थं यावत्सर्वतथागतज्ञानाभिज्ञावाप्तिफलहेतोः संप्रकाशयत्विति ।

अथ भगवान् सर्वतथागतकायवाक्चित्तवज्रस्तथागतः सर्वतथागताध्येषणां विदित्वा ज्ञानप्रदीपवज्रं नाम समाधिं समापद्येदं द्वेषकुलपरमसारहृदयंस्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ॥ वज्रधृक् ॥ अथास्मिन् भाषितमात्रे स एव भगवान् सर्वतथागतकायवाक्चित्तविद्यापुरुषः अक्षोभ्यमहामुद्रासंयोगपरमपदैः कृष्णसितरक्ताकारेण सर्वतथागतकायवाक्चित्तवज्रस्य सर्वतथागतकायवाक्चित्तवज्रे निषीदयामास ।

अथ भगवान् सर्वतथागतसमयसम्भववज्रं नाम समाधिं समापद्येदं मोहकुलपरम[5]सारहृदयं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ॥ जिनजिक् ॥ अथास्मिन्

१ ASB & BOI वैरोचनस्य । २ ASB °स्थलेन । ३ ASB °मयैः । ४ ASB reads साधु साधु वज्रपाणि, साधु साधु गुणाकर सर्वतथागतान् । ५ BOI omits °परम° ।

भाषितमात्रे स एव भगवान् सर्वतथागतकायवाक्चित्तविद्यापुरुषो वैरोचनमहामुद्रासंयोगपरमपदैः[१] सितकृष्णरक्ताकारेण सर्वतथागतकायवाक्चित्तवज्रस्य[२] पुरतो निषीदयामास ।

अथ भगवान् सर्वतथागतरत्नसम्भववज्रश्रियं नाम समाधिं समापद्येदं चिन्तामणिकुल[३]परमसारहृदयं स्वकायवाक्चित्तवज्रेभ्यो[४] निश्चारयामास । रत्नधृक् । अथास्मिन् भाषितमात्रे स एव भगवान् सर्वतथागतकायवाक्चित्तविद्यापुरुषो रत्नकेतुमहामुद्रासंयोगपरमपदैः पीतसितकृष्णाकारेण सर्वतथागतकायवाक्चित्तवज्रस्य दक्षिणे निषीदयामास ।

अथ भगवान् सर्वतथागतमहाराग[५]सम्भववज्रं नाम समाधिं समापद्येदं वज्ररागकुलं[६] परमसारहृदयं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ॥ आरोलिक् ॥ अथास्मिन् भाषितमात्रे स एव भगवान् सर्वतथागतकायवाक्चित्तविद्यापुरुषो लोकेश्वरमहाविद्याधिपतिमहामुद्रासंयोगपरमपदै रक्तसितकृष्णाकारेण सर्वतथागतकायवाक्चित्तवज्रस्य पृष्ठतो निषीदयामास ।

अथ भगवान् सर्वतथागतामोघसमयसम्भववज्रं नाम समाधिं समापद्येदं समयाकर्षणकुलं[७]परमसारहृदयं स्वकायवाक्[८]चित्तवज्रेभ्यो निश्चारयामास ॥ प्रज्ञाधृक् ॥ अथास्मिन् भाषितमात्रे स एव भगवान् सर्वतथागतकायवाक्चित्तविद्यापुरुषोऽमोघवज्रमहामुद्रासंयोगपरमपदैः[९] हरितसितकृष्णाकारेण सर्वतथागतकायवाक्चित्तवज्रस्य उत्तरे निषीदयामास ।

द्वेषमोहस्तथारागश्चिन्तामणिसमयस्तथा ।
कुला ह्येते तु वै पञ्च काममोक्षप्रसाधकाः[१०] ॥४॥ इति ॥

अथ भगवान् सर्वतथागत[११]वज्र[१२]धरानुरागणसमयं[१३] नाम समाधिं समापद्येमां सर्ववज्रधराग्रमहिषीं[१४] स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ॥ द्वेषरति ॥ अथास्यां विनिःसृतमात्रायां स एव भगवान् सर्वतथागतकायवाक्चित्तविद्या[१५]पुरुषः स्त्रीरूपधरो भूत्वा [ सर्वतथागतकायवाक्चित्तवज्रे ][१६] निषीदयामास ।

---

१ BOI °पदेन । २ There is a gap in CUM up to रत्नधृक् ॥ ३ ASB adds °मन्त्र° । ४ ASB omits °वज्रेभ्यो...वाक्चित्त° । ५ ASB adds °समय° । ६ ASB adds °मन्त्र° । ७ ASB adds °मन्त्र° । ८ ASB °वाक्काय° । ९ BOI & CU °देन । १० ASB °प्रेष्यकाः । ११ BOI omits. १२ ASB °वज्रान्ध° । १३ ASB reads सम्भववज्र° only । १४ ASB महिषि, BOI °महर्षि° । १५ BOI omits °विद्या° । १६ ASB दक्षिणकोणे, BOI & CU पूर्वकोणे ।




अथ भगवान् सर्वतथागतानुरागणवज्रं नाम समाधिं समापद्येमां सर्वतथागताग्रमहिषीं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ॥ मोहरति ॥ अथास्यां विनिःसृतमात्रायां स एव भगवान् सर्वतथागतकायवाक्चित्तविद्यापुरुषः स्त्रीरूपधरो भूत्वा पूर्व[1]कोणे निषीदयामास ।

[अथ भगवान् सर्वतथागतरत्नधरानुरागणवज्रं नाम समाधिं समापद्येमां सर्वेर्ष्याधराग्रमहिषीं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ॥ ईर्ष्यारति ॥ अथास्यां

१ BOI & CU 51 दक्षिण° ।

विनिःसृतमात्रायां स एव भगवान् सर्वतथागतकायवाक्चित्तविद्यापुरुषः स्त्रीरूपधरो भूत्वा दक्षिणकोणे निषीदयामास ][१] ।

अथ भगवान् सर्वतथागतरागधरानुरागणवज्रं नाम समाधिं समापद्येमां सर्वरागधराग्रमहिषीं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ॥ रागरति ॥ अथास्यां विनिःसृतमात्रायां स एव भगवान् सर्वतथागतकायवाक्चित्तविद्यापुरुषः स्त्रीरूपधरो भूत्वा पश्चिमकोणे निषीदयामास ।

अथ भगवान् सर्वतथागतकायवाक्चित्तविसम्वादनवज्रं नाम समाधिं समापद्येमां सर्वतथागतप्रज्ञाधराग्रमहिषीं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास । ॥ वज्ररति ॥ अथास्यां विनिःसृतमात्रायां स एव भगवान् सर्वतथागतकायवाक्चित्तविद्यापुरुषः स्त्रीरूपधरो भूत्वा उत्तरकोणे निषीदयामास ।[२]

अथ भगवान् महावैरोचनवज्रं नाम समाधिं समापद्येदं सर्वतथागतमण्डलाधिष्ठानं नाम[३] महाक्रोधं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ॥ यमान्तकृत् ॥ अथास्मिन् विनिःसृतमात्रे स एव भगवान् सर्वतथागतकायवाक्चित्तविद्यापुरुषः सर्वतथागतसन्त्रासनाकारेण पूर्वद्वारे निषीदयामास ।

अथ भगवान् सर्वतथागताभिसम्बोधि[४] वज्रं नाम समाधिं समापद्येमं सर्वतथागतमण्डलाधिष्ठानं नाम[५] महाक्रोधं[६] स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ॥ प्रज्ञान्तकृत् ॥ अथास्मिन् विनिःसृतमात्रे स एव भगवान् सर्वतथागतकायवाक्चित्तविद्यापुरुषो वज्रसमयसन्त्रासनाकारेण दक्षिणद्वारे निषीदयामास ।

अथ भगवान् सर्वतथागतधर्मवशङ्करिं[७] नाम समाधिं समापद्येमं सर्वतथागतरागधर[८] मण्डलाधिष्ठानं नाम महाक्रोधं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ॥ पद्मान्त-

१ The diagram (fig. 1) will show clearly that a long portion (of which a conjectural restoration is given here) must have been omitted by the copyists—G.O.S., P.8 २ ASB & CU सर्वतथागताग्रमहिषीसम्पत् । ३ BOI omits. ४ ASB adds °नय° । ५ BOI omits. ६ ASB adds वज्रं । ७ ASB & BOI °रत्नाकरं । ८ ASB °मं° ।

कृत् ॥ अथास्मिन् विनिःसृतमात्रे स एव भगवान् सर्वतथागत[1]कायवाक्चित्तविद्यापुरुषः सर्वतथागतवागाकारेण पश्चिमद्वारे निषीदयामास ।

अथ भगवान् सर्वतथागतकायवाक्चित्तवज्रं नाम समाधिं समापद्येमं सर्वतथागतकायवाक्चित्तमण्डलाधिष्ठानं नाम महाक्रोधं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ॥ विघ्नान्तकृत् ॥ अथास्मिन् विनिःसृतमात्रे स एव भगवान् सर्वतथागतकायवाक्चित्तविद्यापुरुषः सर्वतथागतकायवाक्चित्ता[2]कारेण उत्तरद्वारे निषीदयामास ।

सर्वतथागतकायवाक्चित्तसम्भाषणमण्डलसमयसत्त्वाः ।

इति श्री सर्वतथागतकायवाक्चित्तरहस्यातिरहस्ये गुह्यसमाजे महागुह्यतन्त्रराजे[3] सर्वतथागतसमाधिमण्डलाधिष्ठानपटलः प्रथमोऽध्यायः ।

१ BOI omits. २ BOI °त्तवज्रा° । ३ See G.O.S., P. 10.

## द्वितीयः पटलः

अथ भगवन्तः सर्वतथागताः भगवतः सर्वतथागतकायवाक्चित्ताधिपतेः पूजां कृत्वा प्रणिपत्यैवमाहुः[1] —

भाषस्व भगवन् सारं कायवाक्चित्तमुत्तमम् ।
सर्वताथागतं गुह्यं बोधिचित्तमनुत्तरम् ॥ १ ॥

अथ भगवान् सर्वतथागतकायवाक्चित्तवज्रस्तथागतः सर्वतथागतानामध्येषणां विदित्वा सर्वबोधिसत्त्वानां चेतसैव चित्तपरिवितर्क[2]माज्ञाय बोधिसत्त्वानेवं आह । उत्पादयन्तु[3] भवन्तः चित्तं कायाकारेण कायं चित्ताकारेण चित्तं वाक्प्रव्याहारेणेति ।

अथ ते महाबोधिसत्त्वाः सर्वतथागतकायवाक्चित्ताकाशाकारेण संयोज्य इदमुदानमुदानयामासुः —

अहो हि समन्तभद्रस्य कायवाक्चित्तवज्रिणः ।
अनुत्पादप्रयोगेण उत्पादोऽयं प्रगीयते ॥ २ ॥

अथ भगवान् सर्वतथागतकायवाक्चित्तवज्रस्तथागतः सर्वतथागताभिसम्बोधिनयवज्रं नाम समाधिं समापद्येदं बोधिचित्तमुदाजहार —

अभावे भावनाभावो भावना नैव भावना ।
इति भावो न भावः स्याद् भावना नोपलभ्यते ॥ ३ ॥

इत्याह भगवान् सर्वतथागतकायवाक्चित्तवज्रस्तथागतः ।

अथ भगवान् वैरोचनवज्रस्तथागतः सर्वतथागताभिसमयवज्रं नाम समाधिं समापद्येदं बोधिचित्तमुदाजहार । सर्वभावविगतं स्कन्धधात्वायतनग्राह्यग्राहकवर्जितं धर्मनैरात्म्यसमतया स्वचित्तमाद्यनुत्पन्नं शून्यताभावम् । इत्याह भगवान् वैरोचनवज्रस्तथागतः ।

अथ भगवान् अक्षोभ्यवज्रस्तथागतः[4] सर्वतथागताक्षयवज्रं नाम समाधिं समापद्येदं बोधिचित्तमुदाजहार —

---

१ ASB कृत्वैव° । २ CU चेतः परिचितकर्म° । ३ ASB °न्तु ।
४ ASB omits this portion.

अनुत्पन्ना इमे भावा न धर्मा न च[१] धर्मता ।
आकाशमिव नैरात्म्यमिदं बोधिनयं दृढम् ॥४॥

इत्याह भगवान् अक्षोभ्यवज्रस्तथागतः ।

अथ भगवान् रत्नकेतुवज्रस्तथागतः सर्वतथागतनैरात्म्यवज्रं नाम समाधिं
समाधिं समापद्येदं बोधिचित्तमुदाजहार —

अभावाः सर्वधर्मास्ते[२] धर्मलक्षणवर्जिताः ।
धर्मनैरात्म्यसम्भूता इदं बोधिनयं दृढम् ॥५॥

इत्याह भगवान् रत्नकेतुवज्रस्तथागतः ।

अथ भगवान् अमितायुर्वज्र[३]स्तथागतः सर्वतथागत[४]ज्ञानार्चिःप्रदीपवज्रं नाम समाधिं[५]
समापद्येदं बोधिचित्तमुदाजहार —

अनुत्पन्नेषु धर्मेषु न भावो न च भावना ।
आकाशपदयोगेन इति भावः प्रगीयते ॥६॥

इत्याह भगवान् अमितायुर्वज्रस्तथागतः ।

अथ भगवान् अमोघसिद्धिवज्रस्तथागतः सर्वतथागताभिभवनवज्रं नाम समाधिं
ापद्येदं बोधिचित्तमुदाजहार —

प्रकृतिप्रभास्वरा धर्माः सुविशुद्धा नभः समाः ।
न बोधिर्नाभिसमयमिदं बोधिनयं दृढम् ॥७॥

इत्याह भगवान् अमोघसिद्धिवज्रस्तथागतः ।

अथ खलु मैत्रेयप्रमुखा महाबोधिसत्त्वाः सर्वतथागतकायवाक्चित्तगुह्यधर्मतत्त्वाक्षरं
श्रुत्वा आश्चर्यप्राप्ताः अद्भुतप्राप्ता इदमुदानमुदानयामासुः ।

अहो बुद्ध अहो धर्म अहो सङ्घस्य देशना ।
शुद्धतत्त्वार्थ शुद्धार्थ बोधिचित्त नमोऽस्तु ते ॥ ८ ॥

---

१ BOI धर्मधर्मान । २ ASB °र्मेभ्यो । ३ ASB °भव° । ४ BOI omits.
५ ASB omits this portion and resumes after the verse that follows.

धर्मनैरात्म्यसंम्भूत बुद्धबोधिप्रपूरकः ।
निर्विकल्प निरालम्ब बोधिचित्त नमोऽस्तु ते ॥ ९ ॥

समन्तभद्र सत्त्वार्थे[१] बोधिचित्तप्रवर्तक ।
बोधिचर्य महावज्र बोधिचित्त नमोऽस्तु ते ॥१०॥

चित्तं ताथागतं शुद्धं कायवाक्चित्तवज्रधृक्[२] ।
बुद्धबोधिप्रदाता[३] च बोधिचित्त नमोऽस्तु ते ॥११॥

इति सर्वतथागतकायवाक्चित्त[४] रहस्यातिरहस्ये गुह्यसमाजे महागुह्यतन्त्रराजे बोधिचित्तपटलो द्वितीयोऽध्यायः ।

१ ASB & CU सर्वार्थं । २ BOI °वज्रिणः । ३ ASB प्रणेता, BOI प्रणोता । ४ ASB °गुह्य° ।

## तृतीयः पटलः

अथ भगवान्[1] कायवाक्चित्तवज्रस्तथागतः सर्वतथागतस्फरणमेघव्यूहं नाम समाधिमापद्येदं वज्रव्यूहं नाम समाधिपटलमुदाजहार ॥

ओं शून्यताज्ञानवज्रस्वभावात्मकोऽहम् ॥

आकाशधातुमध्यस्थं भावयेद् बुद्धमण्डलम् ।
रश्मिमेघमहाव्यूहं बुद्धज्वालासमप्रभम् ॥१॥

पञ्चरश्मिसमाकीर्णं समन्तात् परिमण्डलम् ।
पञ्चकामगुणाकीर्णं पञ्चोपहारमण्डितम् ॥२॥

भावयित्वा समासेन बिम्बमध्ये विभावयेत् ।
वैरोचनमहामुद्रां कायवाक्चित्तलक्षिताम् ॥३॥

कायवाक्चित्तवज्रस्य मुद्रां वाऽथ विभावयेत् ।
अक्षोभ्य प्रवरां मुद्रां सम्भारद्वययोगतः ॥४॥

रत्नकेतुमहामुद्राममितायुः प्रभाकरीम् ।
अमोघसिद्धिमहामुद्रां भावयेद् बुद्धमण्डले ॥५॥

इन्द्रनीलप्रभाकारं कायवाक्चित्तवज्रिणम् ।
वज्रहस्तं महाज्वालं विकटोत्कटभीषणम् ॥६॥

स्फटिकेन्दुप्रभाकारं जटामुकुटमण्डितम् ।
चक्रहस्तं महाज्वालं नानालङ्कारभूषितम् ॥७॥

जाम्बूनदप्रभाकारं बुद्धमेघसमाकुलम् ।
नवशूलं महावज्रं पाणौ तस्य विभावयेत् ॥८॥

मरकतप्रभाकारं वज्रज्वालाविभूषितम् ।
रत्नहस्तं[2] विभावित्वा ज्वालामेवं समन्ततः ॥९॥

---

१ ASB & BOI add सर्वतथागतगुह्यं । २ ASB महारत्नं, CU हस्ते रत्नं ।

पद्मरागप्रभाकारं जटामुकुटमण्डितम्[1] ।
पद्महस्तं महाज्वालं भावयेद् रागवज्रिणम् ॥१०॥

पद्मरश्मिप्रभाकारं बिम्बममोघवज्रिणम् ।
खड्गहस्तधरं सौम्यं भावयेद्बुद्धमण्डलम् ॥११॥

अथ भगवान् कायवाक्चित्तवज्रस्तथागतः धर्मधातुस्वभाववज्रं नाम समाधिं समापद्येदं कायवाक्चित्ताधिष्ठानमन्त्रमुदाजहार ॥ ओं धर्मधातुवज्रस्वभावात्मकोऽहम् ॥

पञ्चवर्णं महारत्नं सर्षपस्थलमात्रकम् ।
नासिकाग्रे प्रयत्नेन भावयेद् योगतः सदा ॥१२॥

स्थिरं तु स्फारयेद् रत्नमस्थिरं नैव स्फारयेत् ।
स्फारयेत् प्रवरैर्मेघैर्वज्रज्वालासमप्रभैः ॥१३॥

चक्रवज्रमहामेघैः पद्मकोशवरायुधैः ।
बोधिसत्त्वमहामेघैः स्फारयेत् स्फरणात्मकः ॥१४॥

आकाशधातुमध्यस्थं वज्रमण्डलमालिखेत् ।
स्वच्छमण्डलमध्यस्थं भावयेत् चक्रमण्डलम् ॥१५॥

पद्ममण्डलसङ्काशं भावयेत्पद्मभावनैः ।
रत्नमण्डलसङ्काशं भावयेत् रत्नतत्परः ॥१६॥

योगमण्डलसम्भूतं लिखेदाकाशसन्निधौ ।
एते वै प्रवरा बुद्धाः कायवाक्चित्तभावनैः ।
मण्डलवज्रसम्भूताः सर्वज्ञाकारलाभिनः ॥१७॥

इति श्री सर्वतथागतकायवाक्चित्तरहस्यातिरहस्ये गुह्यसमाजे महागुह्यतन्त्रराजे[2] वज्रव्यूहो नाम समाधिपटलस्तृतीयः ।

---

१ ASB दीप्तुरागधरप्रभम् । २ ASB reads स्फुरणावभास° after this.

## चतुर्थः पटलः

अथ भगवन्तः सर्वतथागताः पुनः समाजमागम्य भगवन्तं सर्वतथागतगुह्य[2]कायवाक्-चित्तवज्राधिपतिं अनेन स्तोत्रराजेनाध्येषितवन्तः ।

सर्वताथागतं शान्तं सर्वताथागतालयम् ।
सर्वधर्माग्रनैरात्म्यं देशं मण्डलमुत्तमम् ॥१॥
सर्वलक्षणसम्पूर्णं सर्वलक्षणवर्जितम् ।
समन्तभद्रकायाग्र्यं भाषमण्डलमुत्तमम् ॥२॥
शान्तधर्माग्रसम्भूतं ज्ञानचर्याविशोधकम् ।
समन्तभद्रवाचाग्र्यं भाषमण्डलमुत्तमम् ॥३॥
सर्वसत्त्वमहाचित्तं शुद्धं प्रकृतिनिर्मलम् ।
समन्तभद्रचित्ताग्र्यं घोषमण्डलमुत्तमम् ॥४॥
अथ वज्रधरः शास्ता त्रिलोकस्तु त्रिधातुकः[2] ।
त्रिलोकवरवज्राग्र्यस्त्रिलोकाग्रानुशासकः ॥५॥
भाषते मण्डलं रम्यं सर्वताथागतालयम् ।
सर्वताथागतं चित्तं मण्डलं मण्डलाकृतिम् ॥६॥
अथातः सम्प्रवक्ष्यामि चित्तमण्डलमुत्तमम् ।
चित्तवज्रप्रतीकाशं कायवाक्चित्तमण्डलम् ॥७॥
नवेन सुविशुद्धेन[3] सुप्रमाणेन चारुणा ।
सूत्रेण सूत्रयेत् प्राज्ञः कायवाक्चित्तभावनैः ॥८॥
द्वादशहस्तं प्रकुर्वीत चित्तमण्डलमुत्तमम् ।
चतुरस्रं चतुर्द्वारं चतुष्कोणं प्रकल्पयेत् ॥९॥
तस्याभ्यन्तरतश्चक्रमालिखेत्परिमण्डलम् ।
मुद्रान्यासं ततः कुर्यात् विधिदृष्टेन कर्मणा ॥१०॥

---

१ BOI & CU °ताधिपतिं । २ ASB मूर्तिधातुक । ३ ASB शुचिपक्षेण, CU सुवियुक्तेन ।

तस्य मध्ये लिखेद् वज्रमिन्द्रनीलसमप्रभम् ।
पञ्चशूलं महाज्वालं भयस्यापि भयङ्करम् ॥ ११ ॥

पूर्वेण तु महाचक्रं वज्रज्वालाविभूषितम् ।
दक्षिणेन महारत्नं स्फुलिङ्गगहनाकुलम्[1] ॥ १२ ॥

पश्चिमेन महापद्मं पद्मरागसमप्रभम् ।
उत्तरेण महाखड्गं रश्मिज्वालाकुलोज्वलम्[2] ॥ १३ ॥

पूर्वकोणे लिखेन्नेत्रं मेघमध्य[3] समप्रभम् ।
दक्षिणेन ततो वज्रं मामकीकुलसम्भवम् ॥ १४ ॥

पश्चिमेन लिखेत्पद्मं सकन्दं विकचाननम् ।
उत्तरेणोत्पलं कुर्यान्नीलाभ्रमिव शोभनम् ॥ १५ ॥

आलिखेत् पूर्वद्वारे तु मुद्गरं ज्वालसुप्रभम् ।
दक्षिणेनालिखेद्दण्डं वज्रज्वालादिसुप्रभम् ॥ १६ ॥

पश्चिमेनालिखेत्पद्मं खड्गज्वालाप्रभाकरम् ।
उत्तरेण लिखेद्वज्रं वज्रकुण्डलिवज्रिणम् ॥ १७ ॥

परिस्फुटं तु विज्ञाय[4] मण्डलं चित्तमुत्तमुत्तमम् ।
पूजां कुर्वीत यत्नेन कायवाक्चित्तपूजनैः ॥ १८ ॥

षोडशाब्दिकां संप्राप्य योषितं कान्तिसुप्रभाम् ।
गन्धपुष्पाकुलां[5] कृत्वा तस्य मध्ये तु कामयेत् ॥ १९ ॥

अधिवेष्ट्य च तां प्रज्ञां[6] मामकीं गुणमेखलाम् ।
सृजेद्बुद्धपदं सौम्यमाकाशधात्वलङ्कृतम् ॥ २० ॥

विण्मूत्रशुक्ररक्तादीन् देवतानां निवेदयेत् ।
एवं तुष्यन्ति सम्बुद्धाः बोधिसत्त्वा महाशयाः ॥ २१ ॥

इति श्रीसर्वतथागतकायवाक्चित्तरहस्यातिरहस्ये गुह्यसमाजे महागुह्यतन्त्रराजे गुह्यकायवाक्चित्तमण्डलपटलश्चतुर्थोऽध्यायः ।

---

१ ASB °नादकेवलम् । २ ASB °कुलं लिखेत्, BOI °कुलाकुलम् । ३ BOI °न्नेत्रं मेघसङ्घ° । ४ ASB °टाख्यो विज्ञानं । ५ ASB °पुष्पक्चली । ६ ASB समधिष्य च तां प्राज्ञः, BOI अधिवेष्टेच्च ।

## पञ्चमः पटलः

अथ भगवान् सर्वतथागतकायवाक्—

चित्तवज्रधरोराजा सर्वाग्र्यो भुवनेश्वरः ।
धर्मचर्याग्र्यधर्मार्थं भाषते चर्यलक्षणम् ॥१॥

निर्विकल्पार्थसम्भूतां रागद्वेषमहाकुलाम् ।
साधयेत् प्रवरां सिद्धिमग्रयानेह्यनुत्तरे ॥२॥

चण्डालवेणुकाराद्या मारणार्थार्थचिन्तकाः ।
सिद्ध्यन्त्यग्र्ययानेऽस्मिन् महायाने ह्यनुत्तरे ॥३॥

आनन्तर्यप्रभृतयः महापापकृतोऽपि च ।
[1]सिद्ध्यन्ते बुद्धयानेऽस्मिन् महायानमहोदधौ ॥४॥

आचार्यनिन्दनपरा नैव सिद्ध्यन्ति साधने ।
प्राणातिपातिनः सत्त्वा मृषावादरताश्च ये ॥५॥

ये परद्रव्याभिरता नित्यं कामरताश्च ये ।
विण्मूत्राहारकृत्या ये भव्यास्ते खलु साधने ॥६॥

मातृभगिनीपुत्रींश्च कामयेद्यस्तु साधकः ।
स सिद्धिं विपुलां गच्छेत् महायानाग्रधर्मताम् ॥७॥

मातरं बुद्धस्य विभोः कामयन्न च लिप्यते ।
सिद्ध्यते तस्य बुद्धत्वं निर्विकल्पस्य धीमतः ॥८॥

अथ खलु सर्वनिवरणविस्कम्भिप्रभृतयो महाबोधिसत्त्वा आश्चर्यप्राप्ता अद्भुतप्राप्ताः । किमयं भगवान् सर्वतथागतस्वामी सर्वतथागतपर्षन्मण्डलमध्ये दुर्भाषितवचनोदाहारं[2] भाषते । अथ ते सर्वतथागताः सर्वनिवरणविस्कम्भिप्रभृतीनां महाबोधि[3]सत्त्वानां आश्चर्यवचनमुपश्रुत्यैतान् बोधिसत्त्वानेवं आहुः —

१ ASB reads तेऽपि सर्वतः सिद्धन्ति महायानाग्रसाधने । २ BOI °दाहरणं ।
३ ASB omits महाबोधि° ।

अलं कुलपुत्रा मा एवम् वोचत[1] ।

इयं सा धर्मता शुद्धा बुद्धानां सारज्ञानिनाम् ।
सारधर्मार्थसम्भूता एषा बोधिचरिपदम् ॥९॥

अथ खल्वनभिलाप्यानभिलाप्यबुद्धक्षेत्रपरमाणुरजःसमा बोधिसत्त्वा[2] भीताः सन्त्रस्ता मूर्च्छिता अभूवन् । अथ भगवन्तः सर्वतथागतास्तान् सर्वबोधिसत्त्वान् मूर्च्छितान् दृष्ट्वा भगवन्तं सर्वतथागतकायवाक्चित्ताधिपतिमेवमाहुः । उत्थापयतु भगवन्नेतान् महाबोधिसत्त्वान् ।

अथ भगवान् सर्वतथागतकायवाक्चित्तवज्रस्तथागतः आकाशसमताद्वयवज्रं नाम समाधिं समापन्नः । समनन्तरसमापन्नस्य च भगवतः सर्वतथागतकायवाक्चित्तवज्राधिपतेः प्रभया स्पृष्टमात्रा अथ ते बोधिसत्त्वाः स्वेषु स्वेष्वासनस्थानेषु स्थिता अभूवन् । अथ ते सर्वतथागता आश्चर्यप्राप्ता अद्भुतप्राप्ताः प्रीत्योद्बेल्प्रायाः एवं धर्मघोषमकार्षुः ।

अहो धर्म अहो धर्म अहो धर्मार्थसम्भव ।
धर्मशुद्धार्थनैरात्म्य वज्रराज नमो नमः ॥१०॥

कायवाक्चित्तसंशुद्ध[3] आकाशसमतालय ।
निर्विकार निराभास वज्रकाय नमो नमः ॥११॥

चित्तं ताथागतं श्रेष्ठं त्रैयध्व[4]पथवर्तिनम् ।
धातुभूतमहाकाश[5] आकाशार्थ नमो नमः ॥१२॥

आकाशकायसम्भूत .आकाशवाक्प्रवर्तक ।
आकाशचित्तधर्माग्र चर्यापद नमोऽस्तु ते ॥१३॥

इति श्रीसर्वतथागतकायवाक्चित्तरहस्यातिरहस्ये गुह्यसमाजे महागुह्यतन्त्रराजे समन्तचर्याग्रपटलः पञ्चमोऽध्यायः

---

१ ASB एवमेतदवोचत । २ ASB reads महासत्त्वा । ३ CU °भूत । ४ ASB त्रियध्व° । ५ ASB चातंचड़ामहाचित्त ।

# षष्ठः पटलः

अथ खलु अक्षोभ्यवज्रस्तथागतः[1] सर्वतथागतकायवाक्चित्तगुह्यवज्रं नाम समाधिं समापद्येदं चित्ताधिष्ठानमन्त्रमुदाजहार ।

॥ ओं सर्वतथागतचित्तवज्रस्वभावात्मकोऽहम् ॥

अथ भगवान् वैरोचनवज्रस्तथागतो विरजपदवज्रं नाम समाधिं समापद्येदं कायाधिष्ठानमन्त्रमुदाजहार ।

॥ ओं सर्वतथागतकायवज्रस्वभावात्मकोऽहम् ॥

अथ भगवानमितायुवज्रस्तथागतः सर्वतथागतसमता[2]द्वयवज्रं नाम समाधिं समापद्येदं वागधिष्ठानमन्त्रमुदाजहार ।

ओं सर्वतथागतवाग्वज्रस्वभावात्मकोऽहम् ॥

त्रिवज्रं ताथागतं शुद्धं पदं पदविभावनम् ।
निष्पादयेदेभिः प्रवरैर्मन्त्रलक्षणलक्षितम्[3] ॥१॥

अथ भगवान् रत्नकेतुवज्रस्तथागतः ज्ञानप्रदीपवज्रं नाम समाधिं समापद्येदं अनुरागणमन्त्रमुदाजहार ।

॥ ओं सर्वतथागतानुरागणवज्रस्वभावात्मकोऽहम् ॥

अथ भगवानमोघसिद्धिवज्रस्तथागतोऽमोघवज्रं नाम समाधिं समापद्येदं पूजामन्त्रमुदाजहार ।

॥ ओं सर्वतथागतपूजावज्रस्वभावात्मकोऽहम् ॥

पञ्चकामगुणैर्बुद्धान्[4] पूजयेद्विधिवत्[5]सदा ।
पञ्चोपहारपूजाभिर्लघुबुद्धत्वमाप्नुयात् ॥२॥

इत्याह भगवान् सर्वतथागतकायवाक्चित्तवज्राधिपतिर्वज्रधरः ।

---

१ BOI & CU omit °वज्र° । २ CU °गतासमया° । ३ ASB °वर्जितम् । ४ ASB गुणेनैव । ५ CU °विधिना ।

अथ भगवान् सर्वतथागतकायवाक्चित्तवज्राधिपतिर्वज्रधरं[1] इदं सर्वतथागतमन्त्ररहस्यमुदाजहार ।

॥ ओं सर्वतथागतकायवाक्चित्तवज्रस्वभावात्मकोऽहम् ॥

मन्त्रनिध्यप्तिकायेन वाचा मनसि चोदितः ।
साधयेत् प्रवरां सिद्धिं मनः सन्तोषणप्रियाम् ॥३॥

चित्तनिध्यप्तिनैरात्म्यं वाचा कायविभावनम् ।
निष्पादयन्ति[2] संयोगमाकाशसमतालयम् ॥४॥

कायवाक्चित्तनिध्यप्तेः स्वभावो नोपलभ्यते ।
मन्त्रमूर्तिप्रयोगेण[3] बोधिचित्ते च[4] भावना ॥५॥

विचार्येदं समासेन[5] कायवाक्चित्तलक्षणम् ।
भावयेद् विधिसंयोगं समाधिं मन्त्रकल्पितम् ॥६॥

अथ वज्रधरः श्रीमान् सर्वतथागतान्वितः ।
सर्वबुद्धाग्रसर्वज्ञो भाषते भावनोत्तमम् ॥७॥

आकाशधातुमध्यस्थं भावयेच्चन्द्रमण्डलम् ।
बुद्धबिम्बं विभावित्वा सूक्ष्मयोगं समारभेत् ॥८॥

नासाग्रे सर्षपं चिन्तेत्[6] सर्षपे सचराचरम् ।
भावयेत् ज्ञानदं रम्यं रहस्यं ज्ञानकल्पितम् ॥ ९ ॥

आकाशधातुमध्यस्थं भावयेत् सूर्यमण्डलम् ।
बुद्धबिम्बं विभावित्वा पदं तस्योपरिन्यसेत् ॥१०॥

॥ हूं ॥

आकाशधातुमध्यस्थं भावयेच्चक्रमण्डलम् ।
लोचनाकारसंयोगं वज्रपद्मे[7] विभावयेत् ॥११॥

---

१ ASB भगवन्त । २ ASB °येद् त्रि° । ३ In CU last part of the 5th Paṭala and the first part of the 6th are repeated—GOS, 24 ४ ASB °सत्त्ववि° । ५ ASB दृश्यमान° । ६ CU सञ्चयन् चित्तं । ७ CU वज्रं पद्मं ।

आकाशधातुमध्यस्थं भावयेद् रत्नमण्डलम् ।
आदियोगं प्रयत्नेन तस्योपरि विभावयेत् ॥१२॥

आकाशधातुमध्यस्थं भावयेत् पद्ममण्डलम् ।
पद्माकारसुसंयोगं[1] भावयेद् रागवज्रिणम् ॥१३॥

आकाशधातुमध्यस्थं भावयेद् रश्मिमण्डलम् ।
सृजे[2]द्बुद्धपदं सौम्यं परिवारं विशेषतः ॥१४॥

नीलोत्पलदलाकारं पञ्चशूलं विशेषतः ।
यवमात्रं प्रयत्नेन नासिकाग्रे विचिन्तयेत् ॥१५॥

चणकास्थिप्रमाणं तु अष्टपत्रं सकेशरम् ।
नासिकाग्र इदं स्पष्टं भावयेद् बोधितत्परः ॥१६॥

चक्रादीनां विशेषेण भावनां तत्र कल्पयेत् ।
सिद्धयेद्बो[3]धिपदं रम्यं मन्त्र[4]सिद्धिगुणालयम् ॥१७॥

सृजेत्तत्र समासेन बुद्धबोधिप्रतिष्ठितम् ।
निश्चारयेद्धर्मपदं कायवाक्चित्तलक्षितम् ॥१८॥

अथ वज्रधरः श्रीमान् सर्वतत्त्वार्थदेशकः ।
सर्वचर्याप्रसम्भूतो भाषते गुह्यमुत्तमम् ॥१९॥

षण्मासान् भावयेत् प्राज्ञो रूपशब्दरसान्वितः ।
गुह्यतत्त्वमहापूजां सम्पूज्य च विभावयेत् ॥२०॥

विण्मूत्राहारकृत्यार्थं कुर्यात् सिद्धिफलार्थिनः ।
सिद्धयतेऽनुत्तरं तत्त्वं बोधिचित्तमनाविलम् ॥२१॥

मांसाहारादिकृत्यार्थं[5] महामांसं प्रकल्पयेत् ।
सिद्धयते कायवाक्चित्तरहस्यं सर्वसिद्धिषु ॥२२॥

हस्तिमांसं हयमांसं श्वानमांसं तथोत्तमम् ।
भक्षेदाहारकृत्यार्थं न चान्यत्तु[6] विभक्षयेत् ॥२३॥

---

१ ASB पद्मरागप्रभाकारं । २ ASB स्फुर° । ३ ASB & CU सिद्धते बो° ४ ASB & BOI सव° । ५ BOI °हारकृतार्थेन, ASB °हारं च कृत्यर्थं ६ BOI चान्नं तु ।

प्रियो भवति बुद्धानां बोधिसत्त्वश्च धीमताम् ।
अनेन खलु योगेन लघुबुद्धत्वमाप्नुयात् ॥२४॥

कामधात्वीश्वरो लोके स भवेत्पर कर्मकृत् ।
तेजस्वी बलवान् श्रेष्ठः कान्तिमान् प्रियदर्शनः ॥२५॥

सम्मानयदिमं लोके[1] दर्शनेनैव चोदितः ।
इदं तत् सर्वबुद्धानां रहस्यं बोधिमुत्तमम् ।
मन्त्रगुह्यमिदं तत्त्वं कायवाक्चित्तलक्षितम् ॥२६॥

इति श्रीसर्वतथागतकायवाक्चित्तरहस्यातिरहस्ये गुह्यसमाजे महागुह्यतन्त्रराजे कायवाक्चित्ताधिष्ठानपटलः षष्ठोऽध्यायः ॥

---

१ BOI दर्शनं मानयेल्लोके।

## सप्तमः पटलः

अथ भगवान् सर्वतथागतकायवाक्चित्ताधि[1]पतिर्महासमुच्चयमन्त्रचर्याप्रसंबोधिपटलमुदाजहार ।

सर्वकामोपभोगैश्च[2] सेव्यमानैर्यथेच्छतः ।
अनेन खलु योगेन लघुबुद्धत्वमाप्नुयात् ॥१॥
सर्वकामोपभोगैस्तु सेव्यमानैर्यथेच्छतः ।
स्वाधिदैवतयोगेन[3] पराङ्गैश्च[4] प्रपूजयेत् ॥२॥
दुष्करैर्नियमैस्तीव्रैः सेव्यमानो न सिद्ध्यति ।
सर्वकामोपभोगैस्तु सेवयंश्चाशु सिद्ध्यति ॥३॥
भिक्षाशिना न जप्तव्यं नैव भैक्ष्यरतो भवेत् ।
जपमन्त्रैरभिन्नाङ्गः सर्वकामोपभोगकृत् ॥४॥
कायवाक्चित्तसौस्थित्यं प्राप्य बोधिं समश्नुते ।
अन्यथाऽकालमरणं पच्यते[5] नरके ध्रुवम् ॥५॥
बुद्धाश्च बोधिसत्त्वाश्च मन्त्रचर्याप्रचारिणः ।
प्राप्ता धर्मासनं[6] श्रेष्ठं सर्वकामोपसेवनैः ॥६॥
सेवयेत्कामगान्[7] पञ्च ज्ञानार्थिगणिनः[8] सदा ।
तोषयेद्बोधिसत्त्वांश्च रागयेद् बोधिसौरिणा ॥७॥
रूपं विज्ञाय त्रिविधं पूजयेत् पूजनात्मकः ।
स एवं भगवान् विज्ञो बुद्धो वैरोचनः प्रभुः ॥८॥
शब्दं त्रिविधं विज्ञाय देवतानां निवेदयेत् ।
स एवं भगवान् बुद्धो बुद्धरत्नाकरः प्रभुः ॥९॥
गन्धं ज्ञात्वा तु त्रिविधं[9] बुद्धादौ तु निवेदयेत् ।
स एवं भगवान् बुद्धो[10] रागधर्मधरः प्रभुः ॥१०॥

---

१. BOI °त्तवष्काधि° । २. CU °कामार्थभोगार्थैः । ३. BOI °योरैश्वर्यं । ४. CU चोपहारैश्च । ५. ASB पच्चत्वे । ६. ASB प्राप्ता धर्माक्षरं । ७. ASB मांसगुणान् । ८. BOI °रागिणः, CU °लाभिनः । ९. BOI विज्ञाय त्रिविधं गन्धं, ASB गन्धज्ञा गन्धं त्रिविधं । १०. ASB बिम्बो ।

रसं ज्ञात्वा तु त्रिविधं देवतानां निवेदयेत् ।
स एवं भगवान् बिम्बो[1] बुद्धो योऽमोघवज्रिमान् ॥११॥
स्पर्शं ज्ञात्वा तु[2] त्रिविधं स्वकुलस्य निवेदयेत् ।
स एवं भगवान् वज्री अक्षोभ्याकारलाभिनः ॥१२॥
रूपशब्दरसादीनां सदा चित्ते नियोजयेत् ।
इदन्तत् सर्वबुद्धानां गुह्यसारसमुच्चयम् ॥१३॥
स्पर्शशब्दादिभिर्मन्त्री देवतां भावयेत् सदा ।
अथवा भावयेत्तत्र कुलभेदविभावनैः[3] ॥१४॥
बुद्धानुस्मृतिसंबोध्योपस्थानस्मृतिभावना ।
भावनाकायवाक्चित्तवज्रानुस्मृतिभावना ॥१५॥
कुलानुस्मृतियोगेन क्रोधानुस्मृतिभावना ।
समयानुस्मृतियोगाद् भावयन् बोधिमाप्नुयात् ॥१६॥
तां तां तच्छक्तिकां[4] प्राप्य योषितं रूपसुप्रभाम् ।
प्रच्छन्नमारभेत् पूजामधिष्ठानपदं[5]स्मृतिः ॥१७॥
तथागतमहाभासां लोचनां वा वि[6]भावयेत् ।
द्वयेन्द्रियँसमापत्या[7] बुद्धसिद्धिमवाप्नुयात् ॥१८॥
हूँकारं च ओँकारं च पँकारं च विकल्पयेत् ।
पञ्चरश्मिसमाकीर्णं वज्रपद्मं च भावयेत् ॥१९॥
वज्रांशुमिव सज्ज्वालां भावयेत्तां मनोरमाम् ।
बुद्धानुस्मृतियोगादीन् भावयेद् बोधिकाङ्क्षिणः ॥२०॥

तत्र कथं बुद्धानुस्मृतिभावना ।

[ द्वयेन्द्रियसमापत्या ] बुद्धबिम्बं विभावयेत् ।
रोमकूपाग्रविवरे[8] बुद्धमेघान् स्फरेद्बुधः ॥२१॥

[9]तत्र कथं धर्मानुस्मृतिभावना ।

[ द्वयेन्द्रियसमापत्या ] वज्रधर्मं विभावयेत् ।
रोमकूपाग्रविवरे धर्ममेघान् स्फरेद्बुधः ॥२२॥

---

१. ASB बुद्धो । २. ASB स्पर्शंज्ञा तु, BOI स्पर्शंघातुं तु । ३. ASB °भेदेन भेदतः । ४. ASB षोडशाब्दिकां । ५. ASB °पदैः । ६. ASB °बोधि । ७. Cf. द्वयं समापद्यते शि ७६.६. । ८. ASB °रैः । ९. Left out in ASB.

तत्र कथं वज्रानुस्मृतिभावना ।

[ द्वयेन्द्रिय समापत्त्या ] वज्रसत्त्वं विभावयेत् ।
रोमकूपाग्रविवरे वज्रमेघान् स्फरेद्बुधः ॥२३॥

तत्र कथं कुलानुस्मृतिभावना ।

[ द्वयेन्द्रियसमापत्त्या ] बुद्धबिम्बं विभावयेत् ।
रोमकूपाग्रविवरे कुलमेघान् स्फरेद्बुधः ॥२४॥

तत्र कथं क्रोधानुस्मृतिभावना ।

[ द्वयेन्द्रियसमापत्त्या ] क्रोधेश्वरं विभावयेत् ।
रोमकूपाग्रविवरे क्रोधमेघान् स्फरेद्बुधः ॥२५॥

तत्र कथं समयानुस्मृतिभावना ।

स्ववज्रं पद्मसंयुक्तं द्वयेन्द्रियप्रयोगतः ।
स्वरेतोबिन्दुभिर्बुद्धान् वज्रसत्त्वांश्च पूजयेत् ॥२६॥

तत्र कथं मण्डलानुस्मृतिभावना ।

[ द्वयेन्द्रियसमापत्त्या ] स्वरेतस्तु विचक्षणः ।
निःसारयेत् सदा योगी मण्डलान्[१] मण्डलाकरान् ॥२७॥

तत्र कथं कायानुस्मृतिभावना ।

यत्कायं सर्वबुद्धानां पञ्चस्कन्धप्रपूरितम् ।
बुद्धकायस्वभावेन ममापि तादृशं[२] भवेत् ॥२८॥

तत्र कथं वाचानुस्मृतिभावना ।

यदेव वज्रधर्मस्य वाचो निर्युक्ति सम्पदः ।
ममापि तादृशो वाचो भवेद्धर्मधरोपमः ॥२९॥

तत्र कथं चित्तानुस्मृतिभावना ।

यच्चित्तं समन्तभद्रस्य गुह्यकेन्द्रस्य धीमतः ।
ममापि तादृशं चित्तं तद्वद्वज्रधरोपमम् ॥३०॥

तत्र कथं सत्त्वानुस्मृतिभावना ।

यच्चित्तं सर्वसत्त्वानां कायवाक्चित्तलक्षितम् ।
ममापि तादृशं चित्तं आकाशसमसारिणम् ॥३१॥

---

ASB omits. २. ASB समर्पितो दृढं ।

तत्र कथं सर्वमन्त्रमूर्तिकायवाक्चित्तानुस्मृतिभावना ।

यत्कायं मन्त्रवज्रस्य वाचा कायविभावनम् ।
ममापि तादृशं चित्तं[1] भवेन्मन्त्रधरोपमम् ॥३२॥

तत्र कथं समयानुस्मृतिभावना ।

समयाक्षरेन्द्रविधिना विधिवत्फलकांक्षिणः ।
मानयेत् ताथागतं व्यूहं सुतरां सिद्धिमाप्नुयात् ॥३३॥

तत्र कथं प्रज्ञापारमितासमयानुस्मृतिभावना ।

प्रकृतिप्रभास्वराः सर्वे[2] अनुत्पन्ना निराश्रवाः[3] ।
न बोधिर्नाभिसमयो नवान्तं न च सम्भवः ॥३४॥

तत्र कथमनुत्पादानुस्मृतिभावना ।

प्रकृतिप्रभास्वरं सर्वं निर्णि[4]मित्तं निरक्षरम् ।
न द्वयं नाद्वयं शान्तं खसदृशं सुनिर्मलम् ॥३५॥

तत्र कथं द्वेषकुलपूजानुस्मृतिभावना ।

द्वादशाब्दिकां संप्राप्य योषितं स्थिरचेतसम् ।
कुलयोगप्रभेदेन स्वशुक्रेण प्रपूजयेत् ॥३६॥
अनेन ताथागतं कायं[5] चित्तं वज्रधरस्य च ।
वाचं धर्मधं[6]राग्रस्य प्राप्येतेहैव जन्मनि[7] ॥३७॥
कायवाक्चित्तसंसिद्धौ ये चान्ये हीनजाः स्मृताः ।
सिद्ध्यन्ति तस्य जापेन[8] त्रिवज्राभेद्यभावनैः[9] ॥३८॥

इति श्री सर्वतथागतकायवाक्चित्तरहस्यातिरहस्ये गुह्यसमाजे महागुह्यतन्त्रराजे मन्त्रचर्यापटलः सप्तमोऽध्यायः ।

१. CU नित्यं । २. ASB reads सैव । ३. ASB & RASB °श्रयाः । ४. BOI सन्नि° । ५. ASB adds °वाक्° । ६. BOI °वरा° । ७. ASB & BOI वज्रवत्मंनि । ८. ASB तेषां सिध्यन्ति जापेन । ९. ASB °साधनैः ।

## अष्टमः पटलः

अथ भगवान् रत्नकेतुस्तथागतो भगवन्तं सर्वतथागतकायवाक्चित्ताधिपतिं परमेश्वरं महावज्रधरमनेन स्तोत्रराजेणाध्येषयामास ।

वज्रसत्त्व महायानाकाशचर्य विशोधकः ।
समन्तभद्र पूजाग्र देश पूजां जिनोत्तम ॥१॥
रागद्वेषमोहवज्र वज्रयानप्रदेशक ।
आकाशधातुकल्पाग्र घोष पूजां जिनालय ॥२॥
मोक्षमार्गप्रणेता च त्रियानपथवर्तक ।
बुद्ध सौभाग्यशुद्धात्म भाष पूजां नरोत्तम ॥३॥
बोधिचित्त विशालाक्ष धर्मचक्रप्रवर्तक ।
कायवाक्चित्तसंशुद्ध वज्रयान नमोऽस्तु ते ॥४॥
अथ वज्रधरो राजा सर्वाकाशमहाक्षरः ।
सर्वाभिषेकसर्वार्थः सर्वेशो वज्ररत्नधृक् ॥५॥
पूजां ताथागतीं श्रेष्ठां त्रिवज्राभेद्यसंस्थिताम् ।
कायवाक्चित्तसौभाग्यां भाषते जिनसम्भवाम् ॥६॥
प्राप्य कन्यां विशालाक्षीं रूपयौवनमण्डिताम् ।
पञ्चविंशतिकां गुह्ये[1] तिर्यगस्याः[2] प्रकल्पयेत् ॥७॥

शुचौ विविक्ते पृथिवीप्रदेशे
जिनात्मजं शान्तशिवालये च ।
विशुद्धतोयादिविलेपनं वा
कुर्वीत शश्वज्जिनपूजहेतोः ॥८॥
स्तनान्तरं यावच्छिखान्तमध्ये
वर्ल्गोन्तरे[3] चापि न्यसेद्विधिज्ञः ।
नाभिकटिगुह्ये जि[4]नात्मजानां
न्यासं प्रकुर्यात् कुलपञ्चकानाम् ॥९॥

---

१. ASB reads °गुह्य° । २. BOI तिर्यक्ष्वपि, CU तिर्यंग्म्योपि । ३. BOI चरणा° । ४. ASB & BOI read °ह्यजे° ।

आकाशधातुमध्यस्थं भावयेद् ज्ञानसागरम् ।
आत्मानं चन्द्रमध्यस्थं भावयेद् हृदये पुनः[1] ॥१०॥

संहारं च प्रकुर्वीत यदीच्छेत् शान्तवज्रधृक् ।
चतूरत्नमयं स्तूपं रश्मिज्वालाविभूषितम् ॥११॥

ज्ञानोदधिं स्त्रियं प्रस्थाप्य[2] आलयन्तु विचिन्तयेत् ।
स्वरोमकूपविवरे पूजामेघान् स्फरेद्बुधः ॥१२॥

पद्मं पञ्चविधं ज्ञात्वा[3] उत्पलं च विचक्षणः ।
जातिकां त्रिविधं कृत्वा देवतानां निवेदयेत् ॥१३॥

कर्णिकारस्य कुसुमं मल्लिकां यूथिकां तथा[4] ।
करवीरस्य कुसुमं ध्यात्वा पूजां प्रकल्पयेत् ॥१४॥

योजनशतविस्तारं भावयेत् चक्रमण्डलम् ।
कुलानान्तु[5] प्रकुर्वीत सदाध्यान[6]विचक्षणः ॥१५॥

पद्मं वज्रं तथा खड्गं उत्पलं भावयेद्बुधः ।
योजनकोटिविस्तारं चतुरस्रं[7] सुशोभनम् ॥१६॥

चतूरत्नमयं चैत्यं स्वच्छं प्रकृतिनिर्मलम् ।
भावयेच्चामरं प्राज्ञः कुलानां पूजहेतुना ॥१७॥

पञ्चकामगुणैः स्वच्छां यादवीं च समारभेत् ।
रत्नवस्त्रादिभिर्नित्यं पूजयेद्बोधिकांक्षया ॥१८॥

पञ्चोपहारपूजाग्रैर्देवतां तोषयेत् सदा ।
कन्यां रत्नकरीं श्रेष्ठां नानारत्नाद्यलङ्कृताम् ॥१९॥

दद्याद्वै सर्वबुद्धानां सिद्धये तीव्रसाधकाः ।
सप्तरत्नैरिदं कृत्वा परिपूर्णं विचक्षणः ॥२०॥

दद्यात् प्रतिदिनं प्राज्ञो दानाब्धि[8]सिद्धि[9]काङ्क्षया ।
अर्चिपति[10]मुद्रां समादाय बुद्धमण्डलमध्यतः ॥२१॥

---

१. ASB विधिवद्बुधः, । २. BOI °वेत्रपथाम्य । ३. ASB विधिज्ञो हि । ४. BOI ततः । ५. ASB °नान्तः, CU °नान्तं । ६ BOI, CU, °न्यास° । ७. ASB गन्धराग्र° । ८. ASB दानार्थी । ९. ASB सर्वं° । १०. ASB अधिपति°, BOI अरिचिपति° ।

दद्यात् स्पर्शसमायोगं बुद्धानां रागबुद्धिना ।
आकाशधातुमध्यस्थं भावयेद् बुद्ध[1]मण्डलम् ॥२२॥
बिम्बं ताथागतमयं विधिभिः[2] पूजयन्ति ये ।
तूर्णं सम्प्राप्य सुभगां चारुवक्त्रां सुशोभनाम् ॥२३॥
अधिष्ठानपदं ध्यात्त्वा तत्त्वपूजां प्रकल्पयेत् ।
गुह्यशुक्रं विशालाक्षो[3] भक्षयेत् दृढबुद्धिमान्[4] ॥२४॥
इदं तत् सर्वमन्त्राणां कायवाक्चित्तपूजनम्[5] ।
मन्त्रसिद्धिकरं[6] प्रोक्तं[7] रहस्यं ज्ञानवज्रिणाम् ॥२५॥

इति श्री सर्वतथागतकायवाक्चित्तरहस्यातिरहस्ये गुह्यसमाजे महागुह्यतन्त्रराजे चित्तसमयपटलः अष्टमोऽध्यायः ।

---

१. CU व्यूह° । २. ASB & BOI विण्मूत्रैः । ३. BOI °क्षीं । ४. ASB °ना । ५. ASB °वज्रकम् । ६. ASB & CU परं । ७. BOI प्रांप्तं ।

## नवमः पटलः

अथ वज्रधरो राजा सर्वाकाश महाक्षरः[1] ।
सर्वाभिषेकचर्याग्रः सर्ववित् परमेश्वरः ॥१॥
कायवाक्चित्तसंयोगं[2] त्रिवज्राभेद्यमण्डलम् ।
घोषयेत्[3] परमं रम्यं रहस्यं बुद्धज्ञानिनाम् ॥२॥
आकाशधातुमध्यस्थं भावयेद्बुधमण्डलम् ।
अक्षोभ्यवज्रं भावित्वा[4] पाणौ वज्रं विभावयेत् ॥३॥
स्फुलिङ्गगहनाकीर्णं[5] पञ्चरश्मिप्रपूरितम् ।
बुद्धस्य प्रभुतां[6] ध्यात्वा तत्र[7] वज्रेण चूर्णयेत् ॥४॥
कायवाक्चित्तसंयोगं[8] अष्टवज्रेण[9] चूर्णितम् ।
भावयेत् परमं ध्यानं चित्तसिद्धिसमावहम्[10] ॥५॥
अनेन गुह्यवज्रेण सर्वसत्त्वं विघातयेत्[11] ।
येऽप्यस्य तस्य[12] वज्रस्य बुद्धक्षेत्र[13] जिनौरसाः ।
[14] द्वेषकुलसमायोगं ज्ञेयः सर्वकुलोन्नतम् ॥६॥
अथ वज्रधरो राजा ज्ञानमोक्षप्रसाधकः ।
स्वभावशुद्धनिर्लेपो[15] बोधिचर्याप्रवर्तकः ॥७॥
भाषते[16] समयं तत्त्वं बुद्धबोधिप्रसाधकम् ।
आकाशधातुमध्यस्थं भावयेच्चक्रमण्डलम् ॥८॥
वैरोचनं विभावित्वा सर्वबुद्धान् विभावयेत् ।
सर्वरत्नप्रयोगेण वज्रबिम्बं प्रकल्पयेत् ॥९॥
हरणं सर्वद्रव्याणां[17] त्रिवज्रेणविभावयेत् ।
भवन्ति चिन्तामणिसमा द्रव्योदधिप्रपूरिताः ॥१०॥

---

१. ASB °बलः । २. ASB & CU समायोगात् । ३. BOI & RASB °ते । ४. ASB प्रकृत्या । ५. BOI & CU °महसा दीप्तं । ६. ASB प्रथमभूतां । ७. ASB omits. ८. ASB & CU °सम्भोगं । ९. ASB नेष्टं, CU साष्ट° । १०. CU °व्युहं । ११. BOI & CU °सत्त्वाभिघातयेत् । १२. ASB & CU ये ये तेभ्य । १३. BOI & CU क्षिप्रं । १४. BOI, द्वेषकुलसमं तत्र ज्ञेयः सर्वंकुलोद्भवः, CU द्वेषकुलंसमासाद्य ज्ञेयः सर्वंकुलार्णवः । १५. BOI, °निलये, CU °निरये । १६. BOI & CU भाव्यते । १७. CU °नि ।

औरसाः सर्वबुद्धानां भवन्ति मुनिपुंगवाः ।
मोहकुलसमं[२] तत्त्वं ज्ञेयं सर्वकुलोद्भवैः[३] ॥११॥
अथ वज्रधरो राजा रागमोह[४]प्रसाधकः ।
गुह्यशुद्धनिरालम्ब उद्घोषयति मण्डलम् ॥१२॥
आकाशधातुमध्यस्थं भावयेत्पद्ममण्डलम् ।
अमिताभं[५] प्रभावित्वा बुद्धैः सर्वं प्रपूरयेत् ॥१३॥
योषिदाकारसंयोगं सर्वेषां तत्र भावयेत् ।
चतुःसमययोगेन इदं वज्रनयोत्तमम् ॥१४॥
द्वयेन्द्रियप्रयोगेण सर्वांस्तानुप[६]भुञ्जयेत् ।
इदन्तत् सर्वबुद्धानां त्रिकायाभेद्यभावनम् ॥
रागकुलसमायोगं भावनीयं तु[७] मन्त्रिणा ॥१५॥
अथ वज्रधरो राजा वज्रमन्त्रार्थसाधकः ।
ज्ञानसम्भूतनैरात्म्य इदं वचनमब्रवीत् ॥१६॥
आकाशधातुमध्यस्थं भावयेद्बुद्धमण्डलम् ।
वज्रामोघं प्रभावित्वा सर्वबुद्धांस्तु भावयेत् ॥१७॥
मृषावादं वज्रपदं सर्वबिम्बान् विभावयेत् ।
विसम्बादयेज्जिनान्[८] सर्वांस्तथा सर्वजिनालयान् ॥१८॥
इदन्तत् सर्वबुद्धानां वागाकाशं सुनिर्मलम् ।
मन्त्रसिद्धिकरं प्रोक्तं रहस्यं ज्ञानबुद्धिनाम् ॥१९॥
समया[९]कर्षणकुलं प्रेरणीयं[१०] यथार्थतः ।
अथ वज्रधरो राजा त्रिवज्राभेद्यवज्रिणम् ।
सिद्धिवज्रप्रणेता च इदं[११] वचनमब्रवीत् ॥२०॥
आकाशधातुमध्यस्थं भावयेत् समयमण्डलम् ।
रत्नकेतुं प्रभावित्वा सर्वबिम्बैरिदं स्फरेत् ॥२१॥
पारुष्यवचनाद्यैस्तु सेवयन् ज्ञानमाप्नुयात् ।

---

२. ASB °समायोगं, CU तत्त्वसमं। ३. BOI & CU °कुलार्णवे । ४. ASB & CU °मोक्ष° । ५. CU °युं । ६. BOI °ननु° । ७. BOI & CU रागकुले सुरवसमयो भावनीयस्तु । ८. ASB °दवज्रिणं । ९. ASB समा° । १०. BOI °यो । ११. ASB °रमिदं । १२. BOI & CU have left out three consecutive lines.

इत्याह भगवान् सर्वतथागतवज्र[1]व्यूहः ॥२२॥

अथ खलु सर्वतथागतसमयवज्रकेतुप्रमुखास्ते महाबोधिसत्त्वा आश्चर्यप्राप्ता अद्भुतप्राप्ता इदं वाग्वज्र[2]घोषमकार्षुः। किमयं भगवान् सर्वतथागताधिपतिः त्रैधातुव्यतिरिक्तान्[3] सर्वलोकधातुव्यतिरिक्तान् सर्वतथागतसर्वबोधिसत्त्वपर्षन् मध्ये अद्भुतवाक्यार्थ[4]-वज्रपदं भाषते स्म।

अथ भगवन्तः सर्वतथागतास्तानभिलाप्यानभिलाप्यबुद्धक्षेत्रसुमेरुपरमाणुरजःसमान् सर्वतथागतसमयवज्रकेतुप्रमुखान् महाबोधिसत्त्वानेवमाहुः। मा कुलपुत्रा इमां हीनसंज्ञां जुगुप्सितसंज्ञां चोत्पादयथ। ततः कस्माद्धेतोः। राग[5]चर्या कुलपुत्रा यदुत बोधिसत्त्वचर्या यदुत[6] अग्रचर्या। तद्यथा अपि नाम कुलपुत्रा आकाशं सर्वत्रानुगतं[7] आका[8]शानुगतानि सर्वधर्माणि। तानि[9] न कामधातुस्थितानि न रूपधातुस्थितानि[10] नारूपधातुस्थितानि न चतुर्महाभूतस्थितानि। एवमेव कुलपुत्राः सर्वधर्मा अनुगन्तव्याः। इदमर्थवशं विज्ञाय[11] सर्वतथागताः सर्व[12]सत्त्वानामाशयं विज्ञाय ततो धर्मं देशयन्ति।

एवमेव कुलपुत्रा आकाशधातुपदं[13] निरुक्त्या[14] ते[15] तथागतसमया अनुगन्तव्याः। तद्यथा अपि नाम कुलपुत्राः काण्डं च मथनीयं च पुरुषहस्तव्यायामं च प्रतीत्यधूमः प्रादुर्भवति अग्निमभिवर्तयति[16] सचाग्निर्न काण्डस्थितो न मथनीयस्थितो न पुरुषहस्तव्यायामस्थितः। एवमेव कुलपुत्राः सर्वतथागतवज्रसमया अनुगन्तव्या। गमनागमनाद्यैरिति। अथ ते सर्वे बोधिसत्त्वा आश्चर्यप्राप्ता अद्भुतप्राप्ता[17] विस्मयोत्फुल्ललोचना इदं घोषमकार्षुः।

महाद्भुतेषु[18] धर्मेषु आकाशसदृशेषु[19] च।
निर्विकल्पेषु शुद्धेषु संवृति[20]स्तु प्रगीयते ॥२३॥

इति श्री सर्वतथागतकायवाक्चित्तरहस्यातिरहस्ये गुह्यसमाजे महागुह्यतन्त्रराजे परमार्थाद्वयतत्त्वार्थसमयपटलः नवमोऽध्यायः।

---

१. ASB & CU omit °वज्र°। २. ASB बोधिसत्त्व कथं वज्र°, CU वाक्कायवज्र°। ३. ASB व्यक्तरक्षां। ४. ASB & CU °वाक्य°। ५. ASB अग्र। ६. Instead of यदुत etc. ASB has कुलपुत्रा यदुत मन्त्रचर्या। ७. ASB °तथागतं। ८. CU न स्वाका°। ९. BOI & CU add च सर्वधर्माणि। १०. ASB & BOI omit न रूपधातुस्थितानि। ११. ASB नं। १२. BOI & CU omit. १३. BOI omits °धातुपद°। १४. ASB क्तानि। १५. ASB एव। १६. CU निवर्त्तयति। १७. BOI omits. १८. ASB महद्गुणेषु। १९. ASB °समयेष। २०. BOI °द्वि°।

## दशमः पटलः

अथ भगवन्तः सर्वतथागताः पुनः समाजमागत्य[1] भगवन्तं सर्वतथागताधिपतिं[2] महासमयवज्रतत्त्वाभिसम्बोधिकायवाक्चित्तगुह्यं तथागतं नमस्यैवमाहुः।

भाषस्व भगवन् तत्त्वं मन्त्रसारसमुच्चयम्।
कायवाक्चित्तगुह्याख्यं[3] महासिद्धिनयोत्तमम्॥ इति। १॥
अथ वज्रधरो राजा सर्वक्लेशान्तकृत्[4] प्रभुः।
दीप्तवर्णो[5] विशालाक्ष इदं वचनमब्रवीत्॥२॥
कायवाक्चित्तवज्राणां कायवाक्चित्तभावनम्।
निर्विकल्प निरालम्बसमता न क्वचित् स्थितम्॥३॥

अथ भगवान् स्वभावशुद्धस्तथागतः पारमितामन्त्रनयवज्रं नाम समाधिं समापन्नः तांश्च सर्वतथागतानेवं आह। अस्ति भगवन्तः सर्वतथागताः अक्षोभ्यप्रमुखाः सर्वतथा[6]गता अनेकै[7]विद्याकोटिनियुतशतसहस्रैः सर्वार्थक्रियानाटकं दर्शयन्ति। दशदिग्लोकधातुपर्यवसानेषु सर्वलोकधातुषु[8] पञ्चकामगुणैः क्रीडन्ति रमन्ते परिवारयन्ति[9]। न च ते[10] मन्त्र[11]चर्याभियुक्तमवलोकयन्ति। तत्कस्माद्धेतोः? निष्पन्नो बतायं तथागतमन्त्रचर्यानयधर्मतत्त्वे[12]। तत्र[13] तेषां महासत्पु[14]रुषाणां व्यवलोकनार्थमिदं सर्वतथागतकायवाक्चित्तमन्त्र[15]रहस्यं[16] मन्त्रं[17] हृदयसंचोदनं नाम महापरमगुह्यं सर्वतथागतकायवाक्चित्तसमयालम्बनं[18] सर्ववज्रधरकायवाक्चित्तसमयालम्बनं सर्वधर्मधरकायवाक्चित्तसमयालम्बनं स्वकायवाक्चित्तवज्रेभ्यो वाक्पथं[19] निरुक्त्या इदं मन्त्रसमुच्चयमुदाजहार।

॥ हूँ ओँ आः स्वाहा॥

अथास्मिन् भाषितमात्रे सर्वबुद्धाः सहौ[20]रसाः।
कम्पिता मूर्च्छामापेदे वज्रसत्त्वमनुस्मरन्॥४॥

---

१. BOI & CU °म्य। २. Omitted in ASB & CU. ३. ASB °गुह्यं च। ४. CU °शार्णवः। ५ ASB °श्चण्डो। ६. ASB °खास्तथा°। ७. ASB °कैः। ८ BOI & CU omit. ९. ASB विचालयन्ति। १०. ASB तेन। ११. ASB omits. १२. ASB °धर्मे। १३. CU तत्, BOI omits. १४. ASB महापु०। १५. ASB adds °वज्र°। १६. CU adds सर्व° before. १७. ASB adds °गुह्य°। १८. CU omits from सर्व etc, to समयालम्बनं below. १९. ASB वाह्यार्थ। २०. ASB & CU सऔ°।

अथ वज्रपाणिः सर्वतथागताधिपतिरिमं समयमुदाजहार ।

आकाशधातुमध्यस्थं भावयेद् बुद्धमण्डलम् ।
हुँकारं तत्र मध्यस्थं स्वबिम्बेन[1] प्रकल्पयेत् ॥५॥
वज्ररश्मिमहादीप्तं विस्फुरन्तं विचिन्तयेत् ।
बुद्धानां कायवाक्चित्तं हृतं तेन[2] विभावयेत् ॥६॥
स भवेत्तत्क्षणादेव कायवाक्चित्तवज्रधृक् ।
वज्रसत्त्वो महाराजः सर्वाग्रः[3] परमेश्वरः ॥७॥
स्वमण्डलं स्वमन्त्रेण निष्पादनविधिर्भवेत् ।
इदन्तत् सर्वबुद्धानां सारं वज्रसमुच्चयम् ॥८॥
स्वमन्त्रपुरुषं[4] ध्यात्वा चतुःस्थानेषु रूपतः[5] ।
त्रिमुखाकारयोगेन त्रिवर्णेन विभावयेत् ॥९॥

इत्याह भगवान् खवज्रसमयः । तत्रेदं परमं वज्ररहस्यम् ।

हृदयमध्यगतं सूक्ष्मं[6] मण्डलानां विभावनम् ।
तस्य मध्यगतं चिन्तेदँक्षरं परमं पदम् ॥१०॥
पञ्चशूलं महावज्रं भावयेत् योगवित्[7] सदा ।
चिन्तयेत् त्रीणि वज्राणि वज्राङ्कुशप्रभेदतः ॥११॥
हृदयं ताडयेत्तेन देवताद्यं[8] प्रचोदयेत् ।
इदं तत्सर्ववज्राणां बुद्धबिम्बं[10] प्रसाधनम् ॥१२॥
चक्रपद्मकराभ्यां तु[11] वज्राङ्कुशविभावनम् ।
चोदनं हृदये प्रोक्तमिदं नाटकसम्भवम् ॥१३॥
सप्ताहं यावत्कुर्वीत इदं वज्रनयोत्तमम् ।
सिद्ध्यते कायवाक्चित्तरहस्यं ज्ञानवज्रिणाम् ॥१४॥
व्यवलोकयन्ति वरदा भीताः सन्त्रस्तमानसाः ।
ददन्ति विपुलां सिद्धिं मनःसन्तोषणप्रियाम् ॥१५॥
बुद्धाश्च बोधिसत्त्वाश्च मन्त्रचर्याग्रसाधकाः ।
अतिक्रामेद्यदि मोहात्तदन्तं तस्य जीवितम् ॥१६॥

---

१. ASB बुद्धबिम्बं । २. ASB हृद्गतेन । ३. CU पर्वाग्रः, ASB सर्वार्थः । ४. CU °रूपं । ५. ASB पुरतः । ६. ASB गुह्यं । ७. ASB चित्तम° । ८. BOI °गतः । ९, ASB नवतां वा । १०. ASB °बोधि° । ११. ASB & CU °कुलाद्यैस्तु ।

अथ वज्रधरो राजा त्रिलोकाग्रानुशासकः ।
त्रिलोकवरवज्राग्रमिदं[1] घोषमकार्षीत् ॥१७॥
यावन्तो मन्त्रपुरुषास्त्रिवज्रज्ञानपूरिताः ।
द्वये[2]न्द्रियप्रयोगेण सर्वभावविकल्पनम् ॥१८॥
इदन्तत् सर्वबुद्धानां मन्त्रसमयसाधनम्[3] ।
विश्वे[4]श्वरीप्रविष्टेषु वज्रसंयोगभावना[5] ।
रक्तां रक्तेक्षणां वीक्ष्येत्[6] इदं समयमण्डलम् ॥१९॥
अथ वज्रधरो राजा सर्वताथागतात्मजः ।
सर्वाभिषेकबुद्धाग्र इदं वचनमब्रवीत् ॥२०॥
लोकधातुषु सर्वेषु यावत्यो योषितः[7] स्मृताः ।
महामुद्राप्र[8]योगेण सर्वास्ता उपभुञ्जयेत् ॥२१॥
स्फरेद्बुद्धपदं तत्र असंख्या[9] कोटिवज्रिणाम्[10] ।

इत्याह भगवान् बोधिसमयः ।

अनेन प्राप्नुयाद्बोधिं त्रिवज्राकाशसन्निभाम् ।
स भवेद् वज्रसत्त्वाग्रो बोधिचित्तजिनोदधिः ॥२२॥

इति श्री सर्वतथागतकायवाक्चित्तरहस्यातिरहस्ये गुह्यसमाजे महागुह्यतन्त्रराजे सर्वतथागतहृदयसञ्चोदनो नाम पटलः दशमोऽध्यायः ॥

१. ASB °ग्र इदं° । २. BOI यथे° । ३. ASB & CU °भावनम् ।
४. ASB विद्ये° । ५. ASB °नम् । ६. ASB °क्ष्य । ७. ASB & BOI बोधितः ।
८. BOI °दि° । ९. BOI ह्वय । १०. CU °ण ।

## एकादशः पटलः

अथ भगवान्[1] कायवाक्चित्तवज्रस्तथागतो[2] वज्रपुरुषोत्तमं नाम समाधिं समापद्येदं सर्वतथागतमन्त्रवज्र[3]पुरुषोत्तम[4]पटल[5]मुदाजहार ।

त्रिवज्राक्षरमन्त्राग्रैर्महामुद्राविभावनम् ।
कर्त्तव्यं ज्ञानवज्रेण सर्वबोधिसमावहम् ॥१॥
ओँकारं ज्ञानहृदयं कायवज्रसमावहम् ।
आःकारं बोधिनैरात्म्यं वाक्य[6]वज्रसमावहम् ॥२॥
हूँकारं कायवाक्चित्तं त्रिवज्राभेद्यमावहम् ।

इत्याह भगवान् सर्वतथागतकायवाक्चित्तमन्त्र[7]पुरुषः ।

खवज्रमध्यगं चिन्ते[8]न्मण्डलं सर्ववज्रगम् ।
भ्रुँकारं भावयेत्तत्र वज्रमेघस्फरा[9]वहम् ॥३॥

तत्रेदं ज्ञानवज्रहृदयम् ॥

॥ भ्रुँ ॥

वज्रमण्डलमध्यस्थं ओँकारं तु प्रभावयेत् ।
स्वच्छमण्डलमध्यस्थं आः[10]कारं तु विचिन्तयेत् ॥४॥
[11]धर्म्ममण्डलमध्यस्थहूँकारस्य विभावना[12] ।
भ्रुँकारमालयं ध्यात्वा त्रिवज्रोत्पत्तिभावना ॥५॥

इत्याह भगवान् गुह्यसमयः ।

हृदयं त्र्यध्व[13] बुद्धेभ्यः कायवाक्चित्तरञ्जं[14] नम् ।
ओँकारं बुद्धकायाग्र्यं आःकारं वाक्पथं[15] तथा ॥६॥

---

१. ASB reads सर्वतथागतगुह्य as a qulifying epithct २. ASB adds सर्वतथागतवज्रमन्त्रविद्या and CU adds सर्वतथागत before this. ३. ASB adds विद्या । ४. BOI & CU °ष° । ५. ASB पद° । ६. ASB वाग्° । ७. ASB adds विद्या । ८. ASB चित्तं । ९. ASB समा° । १०. BOI आ° । ११. BOI omits this line. १२. ASB प्रभावनम् । १३. ASB सर्व° । १४. CU पञ्जरः । १५. ASB बुद्धवाक् ।

हूँकारं चित्तज्ञानौघं इदं बोधिमयोत्तमम् ।
इदं तत्सर्वबुद्धानां बुद्धबोधिप्रसाधकम् ॥७॥
निर्मितं ज्ञानवज्रेण बुद्धहेतुफलोदयम् ।
एते वै बुद्धपुरुषा मन्त्रविद्येति कीर्तिताः ॥८॥
निष्पादनादिसमयैस्त्रिवज्राभेद्यभावनैः ।

॥ सर्वतथागतं[1] समयतत्त्वं[2] ज्ञानवज्राधिष्ठानहेतुर्नाम समाधिः ॥

विविक्तेषु च रम्येषु इदं योगं समारमेत् ।
सिध्यते कायवाक्चित्तं पक्षैकेन न संशयः ॥९॥
खवज्रमध्यगं चिन्तेत्[3] स्वच्छमण्डलमुत्तमम् ।
निष्पाद्य[4] स्वमन्त्रसमयं ओँकारं हृदये न्यसेत् ॥१०॥
पञ्चरश्मिमहामेघान् वैरोचनाग्रभावनैः ।
अनेन कायं बुद्धस्य वज्रवैरोचनोदधिः ॥११॥
सिद्धयते पक्षमात्रेण बुद्धकायसमप्रभः ।
त्रिवज्रकल्पं तिष्ठेयुः सेवयन्[5] पञ्चज्ञानिनाम् ॥१२॥

इत्याह भगवान् कायं[6]वज्रगुह्यः ।

॥ सर्वतथागतकायँ[7]रश्मिव्यूहो[8] नाम समाधिः ॥

[9]खवज्रमध्यगं चिन्तेत् धर्ममण्डलमुत्तमम् ।
निष्पाद्य स्वमन्त्रपुरुषमाःकारं वाक्पथे न्यसेत् ॥१३॥
पञ्चवर्णमहावज्रं लोकेश्वराग्रभावनैः ।
निष्पाद्य समयज्ञानवाक्समयप्रपञ्चकम् ॥१४॥
धर्मवाक्यं[10] समारूढो धर्मवज्रसमो भवेत् ।
त्रिवज्रकल्पं तिष्ठेयुः सेवयन् पञ्चज्ञानिनाम् ॥१५॥

इत्याह भगवान् वाग्वज्रगुह्यः ।

॥ सर्वतथागतवाग्वज्रसमयसम्भवो नाम समाधिः ॥

खवज्रमध्यगं चिन्तेत् वज्रमण्डलमुत्तमम् ।
निष्पाद्य स्वमन्त्रपुरुषं हूँकारं चित्तसंस्थितम् ॥१६॥

---

१. ASB reads °चित्त° । २. ASB °ये । ३. ASB चित्तं । ४. ASB °द्येत् । ५. ASB °न्नैव । ६. CU वाग्° । ७. CU °वाग्° । ८. ASB वज्ररश्मि, CU समयसम्भवो । ९. CU omits 4 lines from here. १०. BOI °कृपव° ।

महा[1] समयतत्त्वं वै पञ्चवर्णं विभावयेत् ।
कर्तव्यं ज्ञानवज्रेण सर्ववज्रजिनालयम् ॥१७॥
वज्रचित्तसमः शास्ता स भवेद्[2] ज्ञानगुणोदधिः ।
त्रिवज्रकल्पं तिष्ठेयुः सेवयन् पञ्चज्ञानिनाम् ॥१८॥

इत्याह भगवान् वज्रचित्तगुह्यः ।

॥ सर्वतथागतकायवाक्चित्त[3]वज्रो नाम समाधिः ॥

महावज्रं समाधाय ज्ञान[4]मण्डलमध्यतः ।
खँकारं सर्वकार्येषु खवज्रज्ञानसमोभवेत् ॥१९॥

॥ खँ ॥

बुद्धैश्च बोधिसत्त्वैश्च पूज्यमानो मुहुर्मुहुः ।
तिष्ठेत् त्रिकल्प[5]समयं बुद्धैरपि न दृश्यते ॥२०॥

इत्याह भगवान् खवज्रसमयः ।

कायवाक्चित्तवज्रान्तर्ज्वाल[6]सम्भवव्यूहमाली[7] नाम समाधिः ।

ध्यात्वा स्वमन्त्रपुरुषं वज्रमण्डलमध्यतः ।
हृदये हूँकारवज्राख्यं कृत्वा रश्मिविभावनम् ॥२१॥

॥ हूँ ॥

मञ्जुश्रीसमयसम्भोगं कायवाक्चित्तवज्रिणः ।
स भवेद् बोधिसत्त्वात्मा दशभूमिप्रतिष्ठितः ॥२२॥

॥ बोधिसत्त्वज्ञानसमयचन्द्रवज्रो नाम समाधिः ॥

खधातुमध्यगं ध्यात्वा थ्लीँ[8]कारं ज्वालसुप्रभम्[9] ।
परमास्रो[10] वज्रकायेन वज्रकायसमो भवेत्[11] ॥२३॥

॥ थ्लीँ ॥

॥ खवज्रसमयव्यूहाख्यो नाम समाधिः ॥

बुद्धाभिज्ञाग्रसमयैः पञ्चाभिज्ञसमो[12] भवेत् ।
इदन्तत् सर्वबुद्धानां[13] बुद्धाभिज्ञाग्रसाधनम् ॥२४॥

---

१. ASB reads °वज्रं° । २. ASB सर्वं° । ३. ASB adds °समयसम्भव° । ४. ASB वज्र° । ५. ASB °इति कल्प° । ६. ASB °द्वार° । ७. ASB° मालिनी । ८. CU श्रीं । ९. ASB त्रिकालस्वप्रभाकरः । १०. ASB शास्ता, CU परमन्त्रो । ११. ASB माचरेत् । १२. ASB °समयो । १३. ASB सिद्धि ।

खधातुं[1]मध्यगं चिन्तेत् वज्र[2]मण्डलमुत्तमम् ।
वज्रसत्त्वं प्रभावित्वा ज्ञाना[3]कारं प्रभावयेत् ॥२५॥

॥ ओँ ॥

त्रिवज्रसमयध्यानेन त्रिवज्राक्षोभ्यसमो भवेदित्याह भगवानक्षोभ्यवज्रः[4] ।
अक्षोभ्यसमकायेन वाक्चित्ताग्रधृक् सदा[5] ।
लोकधातुषु सर्वेषु पूज्यते[6]ऽक्षोभ्यवज्रिणः ॥२६॥

॥ अक्षोभ्यसमयकायाभिसम्बोधिवज्रो नाम समाधिः ॥

खधातुमध्यगतं चिन्तेत् बुद्धमण्डलमुत्तमम् ।
आकाशवज्रं प्रभावित्वा त्रामा[7]कारं प्रभावयेत् ॥२७॥

॥ त्राँ ॥[8]

त्रिवज्रसमयध्यानेन त्रिवज्रकेतुसमो भवेदित्याह भगवान् रत्नकेतु[9]वज्रः ।
कायवाक्चित्तवज्रेण रत्नकेतुसमप्रभः ।
स भवेद्बोधि[10]नैरात्म्यज्ञानवज्रं समावहः[11] ॥२८॥

॥ रत्नकेतु[12] समयसम्भोगवज्रो नाम समाधिः ॥

खधातुमध्यगतं चिन्तेत् बुद्धमण्डलमुत्तमम् ।
लोकेश्वरं प्रभावित्वा धर्मो[13]ङ्कारं विभावयेत् ॥२९॥

॥ ओँ ॥

त्रिवज्रसमयध्यानेन त्रिवज्रामित[14]समो भवेदित्याह भगवानमितवज्रः ।
कायवाक्चित्तवज्रेण अमितायुः समप्रभः ।
स भवेत्सर्वसत्त्वानां महायानपथोदयः ॥३०॥

॥ अमित[15]वज्रप्रभावश्रीर्नाम समाधिः ॥

खधातुमध्यगतं चिन्तेत् बुद्धमण्डलमुत्तमम् ।
वज्रोत्पलं[16] प्रभावित्वा सम्यौंकारं प्रभावयेत् ॥३१॥

---

१. CU °वज्र° । २. ASB बुद्ध° । ३. ASB °नमा° । ४. ASB राजः । ५. ASB चित्तत्रिधारिणः । ६. ASB °पूजयेद° । ७. ASB रमा° । ८. CU ओं । ९. CU omits °केतु° । १०. ASB °गुह्य° । ११. BOI & CU °लयः । १२. BOI & CU omit °केतु° । १३. ASB धन्वा°, CU धर्मा° । १४. CU °मृत° । १५. ASB & CU add °गुण°, CU omits °वज्र° । १६. CU °त्प्रभं ।

॥ ओँ ॥

त्रिवज्रसमयध्यानेन त्रिवज्रामोघसमो भवेदित्याह भगवानमोघवज्रः ।

कायवाक्चित्तवज्रेण वज्रामोघसमप्रभः ।
स भवेद् ज्ञानोदधिः श्रीमान् सर्वसत्त्वार्थसम्भवः ॥३२॥

॥ अमोघसमयरश्मिज्ञानाग्रसम्भवो नाम समाधिः ॥

खधातुमध्यगतं चिन्तेत् बुद्धमण्डलमुत्तमम् ।
वैरोचनवज्रं प्रभावित्वा त्रिरेँकारं[1] प्रभावयेत् ॥३३॥

॥ ओँ ओँ ओँ ॥

त्रिवज्रसमयध्यानेन[2] वैरोचनवज्रसमो भवेदित्याह भगवान् वैरोचनवज्रः ।

कायवाक्चित्तवज्रेण वैरोचनसमप्रभः ।
स भवेज्ज्ञानसम्बोधिस्त्रिकायामेघसाधकः ॥३४॥

॥ कायवाक्चित्तालम्बनसम्बोधिवज्रो[3] नाम समाधिः ॥

पर्वतेषु विविक्तेषु नदीप्रस्रवणेषु च[4] ।
श्मशानादिष्वपि कार्यमिदं ध्यानसमुच्चयम् ॥३५॥

अक्षोभ्यज्ञानवज्रादीन् ध्यात्वा खवज्रमध्यतः ।
पञ्चाभिज्ञप्रयोगेण स्थाने बुद्धाग्रभावना ॥३६॥

इत्याह भगवान् महावज्रसमयवज्राभिज्ञः ।

पञ्चशूलं महावज्रं पञ्चज्वालाविभूषितम् ।
पञ्चस्थानप्रयोगेण पञ्चाभिज्ञसमो[5] भवेत् ॥३७॥

स्वमन्त्रं भावयेच्चक्रं स्फुलिङ्गगहनाकुलम् ।
पञ्चवज्रप्रयोगेण पञ्चाभिज्ञसमो[6] भवेत् ॥३८॥

खवज्रमध्यगं चिन्तेत् बुद्धज्वालासमप्रभम् ।
ध्यात्वा बुद्धप्रवेशेन बुद्धाश्रयसमो भवेत् ॥३९॥

---

१. त्रिकालं, CU त्रयोंकारं । २. CU adds त्रिवज्र before this. ३. ASB °वज्ञानं । ४. ASB वा । ५. BOI वज्रा° । ६. ASB & CU वज्रा° ।

बुद्धमण्डलमध्यस्थं काये वैरोचनं न्यसेत् ।
ओँकारं हृदये ध्यात्वा मन्त्रविज्ञानभावना[1] ॥४०॥

निरोधवज्रगतं[2] चित्ते यदा तस्य प्रजायते ।
स भवेच्चिन्तामणिः श्रीमान् सर्वबुद्धाग्रसाधकः[3] ॥४१॥

बुद्धमण्डलमध्यस्थं वज्राक्षोभ्यं प्रभावयेत् ।
हूँकारं हृदये ध्यात्वा चित्तबिन्दुगतं न्यसेत् ॥४२॥

बुद्धमण्डलमध्यस्थं अमिताभं[4] प्रभावयेत् ।
आःकारं हृदये ध्यात्वा चित्तं[5] बिन्दु गतं न्यसेत् ॥४३॥

इदन्तत् समयाग्राग्र्यं[6] त्रिवज्रा मेघभावनम्[7] ।
निरोधसमयज्ञानं बुद्धसिद्धिसमावहम्[8] ॥४४॥

स्ववज्रधातुमध्यस्थं भावयेत् स्वच्छमण्डलम् ।
ओँकारं कायवाक्चित्ते ध्यात्वा कल्पं स तिष्ठति ॥४५॥

स्ववज्रधातुमध्यस्थं भावयेद्धर्ममण्डलम् ।
आःकारं कायवाक्चित्ते ध्यात्वा कल्पं स तिष्ठति ॥४६॥

स्ववज्रधातुमध्यस्थं भावयेद्वज्रमण्डलम् ।
हूँकारं कायवाक्चित्ते ध्यात्वा कल्पं स तिष्ठति ॥४७॥

इत्याह भगवान् त्रिवज्र[10]ज्ञानसमयः ।

यः प्रभूतमिमं योगं कायवाक्चित्तवज्रिणः ।
पठेद्वा चिन्तयेद्वापि सोऽपि वज्रधरो भवेत्[11] ॥ ४८ ॥

इति श्रीसर्वतथागतकायवाक्चित्तरहस्यातिरहस्ये गुह्यसमाजे महागुह्यतन्त्रराजे सर्वतथागतमन्त्रसमयतत्त्ववज्रविद्यापुरुषोत्तमपटल एकादशोऽध्यायः ॥

---

१. ASB सर्वं° । २. ASB °चक्र° । ३. ASB °धारकः । ४. BOI & CU अमितवज्रं । ५. ASB वज्र° । ६. ASB °ग्रेग्र । ७. BOI साधनम् । ८. ASB भावयन् । ९. CU° कुलम्, ASB° वहेत् । १०. ASB & BOI add °कल्प° । ११. ASB°पमं भवेत् ।

## द्वादशः पटलः

अथ वज्रधरःशास्ता स्रष्टा[१] ज्ञानाग्रसाधकः त्रिवज्रसमयतत्त्ववाक् वज्रमुदाजहार[२] ।

खधातुसमभूतेषु[३] निर्विकल्पस्व[४]भाविषु ।
स्वभावशुद्धधर्मेषु नाटकोऽयं प्रभाव्यते ॥ १ ॥

महाटवीप्रदेशेषु[५] फलपुष्पाद्यलङ्कृते ।
पर्वते विजने साध्यं[६] सर्वसिद्धिसमुच्चयम् ॥ २ ॥

॥ मँ[७] ॥

कायवाक् चित्तवज्रेषु मञ्जु[८]वज्रप्रभावना ।
स्फरणं कायवाक् चित्ते मञ्जुवज्रसमो भवेत्[९] ॥ ३ ॥
योजनशतविस्तारं[१०] प्रभया दीप्तवज्रया[११] ।
[१२]आभासयति सिद्धात्मा[१३] सर्वालङ्कार[१४]भूषितः ॥ ४ ॥
ब्रह्मरुद्रादयो देवा न पश्यन्ति कदाचन ।
॥ मञ्जुश्रीवज्राग्रसमयान्तर्द्धान[१५]करी नाम समाधिः ॥ ५ ॥
विण्मूत्रपञ्चसमयैस्त्रि[१६]वज्राभेद्यसम्भवैः ।
कृत्वा त्रिलोहसहितं मुखे प्रक्षिप्य भावयेत् ॥ ६ ॥
अभेद्यं सर्वबुद्धानां चित्तं तत्र[१७] प्रभावयेत् ।
स भवेत्तत्क्षणादेव[१८] मञ्जुवज्रसमप्रभः ॥ ७ ॥
स्वमन्त्रेण प्रभावित्वा चक्रं स्फुलिङ्गसुप्रभम् ।
आलयं सर्वबुद्धानां ध्यात्वा बुद्धसमो भवेत् ॥८॥
षट्त्रिंशत्सुमेरूणां यावन्तः परमाणवः[१९] ।
भवन्ति तस्यानुचराः सर्ववज्रधरोपमाः ॥९॥

---

१. CU भ्रष्टा । २. CU °हरेत् । ३. ASB खधातुसमयतुल्येषु । ४ CU °ल्पेषु । ५. CU °दे° । ६. ASB जिनसाध्यस्थं । ७. ASB मूँ । ८. ASB वज्र । ९. ASB समुद्भवेत् । १०. ASB °सङ्ग° । ११. CU मञ्जु० । १२. BOI भव° । १३. ASB दीप्ता° । १४. ASB सङ्घा° । १५. BOI °तद्बोध° । १६. BOI ख° । १७. ASB ततः । १८. ASB °दक्षयो देवो । १९. ASB adds योषितस्तस्य तावन्त्यो भविष्यन्ति गुणालयाः । त्रैधातुक महावज्रो भवेद्बुद्धनमस्कृतः ।

॥ चक्रसमयो नाम समाधिः ॥

स्वमन्त्रेण महावज्रं ध्यात्वा मण्डलमध्यतः ।
आलयं सर्व[1]वज्राणां चित्तवज्रसमो भवेत् ॥१०॥

षट्त्रिंशत्सुमेरूणां यावन्तः परमाणवः ।
योषितस्तस्य तावन्त्यो भविष्यन्ति गुणालयाः ॥
त्रैधातुकमहावज्रो भवेद्रुद्र[2]नमस्कृतः ॥११॥

॥ वज्रसमता नाम समाधिः ॥

पद्मं स्वमन्त्रवज्रेण ध्यात्वा अष्टदलं महत् ।
आलयं सर्वधर्माणां चिन्त्य[3]धर्मसमो भवेत् ॥१२॥

षट्त्रिंशत्सुमेरूणां यावन्तः परमाणवः ।
संस्थापयति[4] शुद्धात्मा बुद्धपूजा[5]ग्रमण्डले ॥१३॥

॥ पद्मसमता नाम समाधिः ॥

तिष्ठेत् त्रिकल्पसमयं सेवयन् पञ्चज्ञानिनाम् ।
दशदिक्सर्वबुद्धानां त्रिगुह्यं पर्यु[6]पासते ॥१४॥

स्वमन्त्रं भावयेत्खड्गं[7] पञ्चरश्मिसमप्रभम्[8] ।
पाणौ गृह्यविशालाक्षः [9]वज्रविद्याधरो भवेत् ॥१५॥

त्रैधातुकमहापूज्यो दैत्यब्रह्मेन्द्रनमस्कृतः ।
त्रिसाहस्र[10]महाशूरो भवेद्ब्रह्म नरोत्तमः ॥१६॥

यदभिलषति[11] चित्तेन कायवाक्चित्तवज्रिणः ।
ददाति तादृशीं सिद्धिं चित्तवज्रप्रभाविताम् ॥१७॥

॥ सर्वखड्गोत्तमो नाम समाधिः ॥

ओंकारगुटिकां ध्यात्वा चणकास्थिप्रमाणतः ।
मध्ये स्वदेवताबिम्बं मुखे चिन्त्य विभावयेत् ॥१८॥

---

१. ASB चित्त° । २. ASB&CU ब्रह्मरुद्र° । ३. ASB सर्वं° । ४. ASB पयेत्रि° । ५. ASB °वज्रा° । ६. ASB पूज्यमु° । ७. ASB भगं । ८. BOI °माकुलम् । ९. BOI त्रिव° । १०. ASB °स्रैक° । ११. ASB °लषित° ।

स भवेत्तत्क्षणादेव बोधिसत्त्व[1]समप्रभः ॥
[2]उदितादित्यसङ्काशो जाम्बूनदसमप्रभः ॥१९॥
आःकारगुटिकां ध्यात्वा चणकास्थिप्रमाणतः ।
[3]मध्ये स्वदेवताबिम्बं मुखे चिन्त्य विभावयेत् ॥२०॥
स भवेत्तत्क्षणादेव बोधिचित्त[4]समप्रभः ।
उदितादित्यसङ्काशो जाम्बूनदसमप्रभः ॥२१॥
हूँकारगुटिकां ध्यात्वा चणकास्थिप्रमाणतः ।
मध्ये स्वदेवताबिम्बं मुखे चिन्त्य विभावयेत् ॥२२॥
स भवेत्तत्क्षणादेव वज्रकायसमप्रभः ।
उदितादित्यसङ्काशो जाम्बूनदसमप्रभः ॥२३॥
खधातुस्वच्छमध्यस्थं वैरोचनं प्रभावयेत् ।
हस्ते चक्रं प्रभावित्वा चक्रविद्याधरो भवेत् ॥२४॥
महाचक्रकुलं ध्यात्वा इदं चक्रा[5]ग्रसाधनम् ।
कर्तव्यं ज्ञानवज्रेण चक्र[6]कायाग्रयोगतः[7] ॥२५॥
खधातुवज्रमध्यस्थं ज्ञाना[8]क्षोभ्यं विभावयेत् ।
हस्ते वज्रं प्रभावित्वा वज्रविद्याधरो भवेत् ॥२६॥
महावज्रकुलं ध्यात्वा इदं वज्राग्रसाधनम् ।
कर्तव्यं ज्ञानवज्रेण वज्रकायाग्रयोगतः ॥२७॥
खधातुरत्नमध्यस्थं रत्नवज्रं प्रभावयेत् ।
हस्ते रत्नं प्रभावित्वा रत्नविद्याधरो भवेत् ॥२८॥
महारत्नकुलं ध्यात्वा इदं रत्नाग्रसाधनम् ।
कर्तव्यं ज्ञानवज्रेण रत्नकायाग्रयोगतः[9] ॥२९॥
खधातुपद्म[10]मध्यस्थं अमिताभं[11] प्रभावयेत् ।
हस्ते पद्मं प्रभावित्वा पद्मविद्याधरो भवेत् ॥३०॥

---

१. ASB & CU °चित्त° । २. BOI omits this line. ३. Omitted in ASB and CU. ४. BOI °ज्ञान° । ५. ASB °ज्ञाना° । ६. ASB बुद्ध° । ७. ASB °जनात् । ८. ASB °त्वा° । ९. ASB repeats from खधातुवज्रमध्यस्थं etc. to कर्तव्यं ज्ञानवज्रेण in this line. १०. CU °धर्मं° । ११. CU °युं ।

महापद्मकुलं ध्यात्वा इदं पद्माग्रसाधनम् ।
कर्तव्यं ज्ञानवज्रेण धर्मकायप्रयोगतः ॥३१॥

खधातुसमयमध्यस्थं अमोघाग्रं प्रभावयेत् ।
हस्ते खड्गं प्रभावित्वा खड्गविद्याधरो भवेत् ॥३२॥

महासमयकुलं ध्यात्वा इदं समयाग्रसाधनम्[१] ।
कर्तव्यं ज्ञानवज्रेण कायसमययोगतः ॥३३॥

त्रिशूलज्ञाना[२]ङ्कुशादयः साध्या वज्रप्रभेदतः ।
सिध्यन्ति तस्य ध्यानेन कायवाक्चित्तसाधनै[३]: ॥३४॥

इत्याह भगवान् महासमयसिद्धि[४]वज्रः ।

चतुष्पथैकवृक्षे वा एकलिङ्गे शिवालये ।
साधयेत् साधको नित्यं वज्राकर्षं विशेषतः ॥३५॥

त्रियोगमन्त्रपुरुषं ध्यात्वा त्रियोगवज्रिणम् ।
अङ्कुशं कायवाक्चित्तं बुद्धानां ज्ञानबुद्धिनाम् ॥३६॥

वायव्यमण्डलाग्रस्थं[५] बुद्धाकर्षणमुत्तमम् ।
दशदिक्समय[६]सम्भूतं वज्रेणाकृष्य[७] भुञ्जयेत्[८] ॥३७॥

॥ खधातुसमयवज्राकर्षणम् ॥

वैरोचनं महाचक्रं ध्यात्वाङ्कुशं जिनालयम् ।
वज्रपद्मादिभिः कार्यं समयाकर्षणमुत्तमम् ॥३८॥

॥ त्रैधातुकसमयाकर्षणम्[९] ॥

सर्वाकारवरोपेतं बुद्धबिम्बं विभावयेत् ।
पाणौ च कायवाक्चित्तं अङ्कुशादीनि भावयेत् ॥३९॥

अनेन खलु योगेन स भवेत्परकर्मकृत् ।
सर्वाकारवरोपेतं कायवज्रं विभावयेत् ॥४०॥

---

१. ASB & CU भावनं । २. BOI °ज्वाला° । ३. CU °भाव° । ४. ASB सिद्धिसमय° । ५. ASB °मध्यस्थं, CU° ग्रस्तं । ६. ASB omits °समय° । ७. ASB °ष्योप° । ८. BOI भुञ्जते । ९. BOI repeats.

जिह्वावज्रप्रयोगेण ध्यात्वा वाग्वज्रसमो भवेत् ।
त्रिगुह्यसमयपूजाग्रीं पूजां पूज्यं[1] प्रभावयेत् ॥४१॥
इदन्तत् सर्वसिद्धीनां सारं गुह्यसमुच्चयम् ।

इत्याह भगवान् महागुह्यसमयः ।

महामांससमयाग्रेण साधयेत् त्रिवज्रमुत्तमम् ।
विण्मूत्रसमयाग्रेण[2] भवेद्विद्याधरः प्रभुः ॥४२॥
हस्तिसमयमांसेन[3] पञ्चाभिज्ञत्वमाप्नुयात्[4] ।
अश्वसमयमांसेनान्तर्द्धानाधिपो[5] भवेत् ॥४३॥
श्वानसमयमांसेन सर्वसिद्धिप्रसाधनम् ।
गोमांससमयाग्रेण वज्राकर्षणमुत्तमम् ॥४४॥
अलाभे सर्वमांसानां ध्यात्वा सत्त्वं[6] विकल्पयेत् ।
अनेन वज्रयोगेन सर्वबुद्धैरधिष्ठ्यते[7] ॥४५॥
सर्वाकारवरोपेतं कायवाक्चित्तवज्रिणम् ।
हृदये ज्ञानसमयं मुकुटे वज्राग्रधारिणम् ॥४६॥
प्रीणनं सर्वबुद्धानां इदं समयनयोत्तमम् ।
कर्तव्यं समयाग्रेण सर्वसिद्धिकरं परम् ॥४७॥

॥ सर्वसमयज्ञानवज्राहारो नाम समाधिः ॥

जिह्वा[8]समयवज्राग्रे ध्यात्वा हूँकारवज्रिणम् ।
पञ्चामृतप्रयोगेण वज्रसत्त्वत्वमाप्नुयात्[9] ॥४८॥
आःकारौंकारसमयमिदं वज्रनयोत्तमम् ।
अनेन खलु योगेन वज्रसत्त्वसमो भवेत् ॥४९॥

॥ समयवज्रामृतमालिनी[10] नाम समाधिः ॥

त्रिवज्रसमयसिद्ध्यर्थं[11] भवेत्त्रिकायवज्रिणः ।
दशदिक्सर्वबुद्धानां भवेच्चिन्तामण्योदधिः ॥५०॥

---

१. ASB पूज्यां । २. ASB °योगेन । ३. ASB मांसमयाग्रेण । ४. ASB °भिज्ञाः समा° । ५. ASB अन्त्रवर्द्धनाधिपति° । ६. ASB सर्व° । ७. ASB °ष्ठिते । ८. ASB & CU जिह्वाग्र° । ९. CU समो भवेत्, BOI त्रिवज्रत्व-माप्नुयात्° । १०. BOI °ली । ११. ASB °द्धाग्रे, CU °द्धये ।

आभासयति वज्रात्मा लोकधातुं समन्ततः ।
चक्रसमयसिद्ध्यन्ते[१] बुद्धकायसमो भवेत् ॥५१॥
विचरेत् समन्ततः सिद्धो गङ्गावालुक[२]सर्वतः ।
सर्वेषु समयाग्रेषु विद्याधरप्रभुर्भवेत् ॥५२॥
सर्वसमयसिद्ध्यग्रे कायवज्रप्रभावतः ।
अन्तर्द्धा[३]नेषु सर्वेषु[४] साहस्रैकावभासकः ।
हरते सर्वसिद्धीनां[५] भुङ्क्ते कन्यां[६] सुराग्रजाम् ॥५३॥
गङ्गावालुकसमान् बुद्धांस्त्रिवज्रालयसंस्थितान्[७]।
पश्यते चक्षुर्वज्रेण स्वहस्तैकं यथामलम् ॥५४॥
गङ्गावालुकसमैः क्षेत्रैः ये शब्दाः संप्रकीर्तिताः ।
श्रृणोत्यभिज्ञावशतः श्रोत्रस्थमिव सर्वतः ॥५५॥
गङ्गावालुकसमैः क्षेत्रैः कायवाक्चित्तलक्षणम् ।
स वेत्ति सर्वसत्त्वानां चित्ताख्यं नाटकोद्भवम् ॥५६॥
गङ्गावालुकसमैः कल्पैः संसारस्थितिसम्भवम् ।
पूर्वनिवास[८]समयं दिनत्रयमिव स्मरेत् ॥५७॥
गङ्गावालुकसमैः कार्यैः बुद्धमेघाद्यलंकृतैः ।
गङ्गावालुकसमान् कल्पान् स्फरेद्[९] दृढाग्रवज्रिणः ॥५८॥

इत्याह भगवान् समयाभिज्ञः ।

वज्रचक्षुर्वज्रश्रोत्रं वज्रचित्तं वज्रपाणी[९] वज्रऋद्धिं[१०]श्चेति ।
बुद्धाभिज्ञार्थसंसिद्धौ[११] बुद्धकायसमो भवेत् ।
गङ्गावालुकसंख्यैश्च परिवारैः परीवृतः ।
विचरेत कायवाग्वज्रो लोकधातुं समन्ततः ॥५९॥
सेवासमयसंयोगमुपसाधनसम्भवम् ।
साधनार्थसमयं च महासाधनचतुर्थकम् ॥६०॥

१. ASB & BOI °सिद्धाग्रे । २ ASB °लि° । ३. CU °द्धरि° । ४. ASB omits. ५. BOI बुद्धानां । ६. BOI भुंजते च । ७. CU निरास । ८. ASB omits. ९. BOI & CU वज्रनिवास । १०. CU °ऋषि° । ११. BOI & CU °सिद्धिस्तु ।

विज्ञाय वज्रभेदेन ततः कर्माणि साधयेत् ।
सेवासमाधिसंयोगं भावयेत् बोधिमुत्तमम् ॥६१॥

उपसाधनसिद्धयग्रे[1] वज्रायतनविचारणम् ।
साधने चोदनं प्रोक्तं मन्त्राधिपतिभावनम् ॥६२॥

महासाधनकालेषु बिम्बं स्वमन्त्रवज्रिणः ।
मुकुटेऽधिपतिं ध्यात्वा सिद्धयते ज्ञानवज्रिणः ॥६३॥

सेवाज्ञानामृते[2] नैव कर्तव्यं सर्वतः सदा ।
एषो हि सर्वमन्त्राणां सर्वमन्त्रार्थ[3] साधकः ॥६४॥

महाटवीप्रदेशेषु विजनेषु महत्सु च ।
गिरिगह्वरकुलेषु सदा सिद्धिरवाप्यते ॥६५॥

इत्याह भगवान् महासाधनवज्रः ।

अथ वज्रचतुष्केण[4] सेवा कार्या[5] दृढव्रतैः ।
त्रिवज्रकायमन्त्रेण[6] भावयन् सिद्धिमश्नुते ॥६६॥

चतुःसन्ध्यप्रयोगेण पञ्चस्थानेषु बुद्धिमान् ।
ओंकारज्ञान[7]वज्रेण ध्यात्वा सम्बरम[8]विशेत् ॥६७॥

दिनानि सप्त पक्षं च मासमप्यब्दमेव च ।
उत्पाद्य वज्रसमयं लघु सिद्धिरवाप्यते ॥६८॥

विस्तरेण मया प्रोक्तं दिनभेदप्रचोदतः ।
पक्षाभ्यन्तरतः सिद्धिरुक्ता गुह्याग्रसम्भवैः ॥६९॥

तत्रेदमुपसाधनसम्बरविषयम् ।

बुद्धकायधरः श्रीमान् त्रिवज्राभेद्यभावितः ।
अधिष्ठानपदं मेऽद्य करोतु[9] कायवज्रिणः[10] ॥७०॥

---

१. ASB °द्धयते । २. ASB °मुत्र । ३. ASB तन्त्रतत्त्वार्थं°, CU मन्त्रतत्त्वार्थं । ४. ASB °ष्कोणे, BOI वज्राचार्येण । ५. CU सर्वा काया । ६. BOI समेतेन, CU समानेन । ७. ASB omits °ज्ञान° । ८. ASB °समाधि । ९. ASB कुर्वन्तु । १०. This verse is repeated in CU.

दशदिक्संस्थिता बुद्धास्त्रिवज्राभेद्यभाविताः ।
अधिष्ठानपदं मेऽद्य कुर्वन्तु कायलक्षितम् ॥७१॥

तत्रेदं साधनसम्बरविषयम् ॥

धर्मो वै[१] वाक्पथः श्रीमान् त्रिवज्राभेद्यभावितः ।
अधिष्ठानपदं मेऽद्य करोतु वाक्य[२]वज्रिणः ॥७२॥

दशदिक्संस्थिता बुद्धास्त्रिवज्राभेद्यभाविताः ।
अधिष्ठानपदं तस्य कुर्वन्तु वाक्पथोद्भवम् ॥७३॥

त[३]त्रेदं महासाधनसम्बरविषयम् ।

चित्तवज्रधरः श्रीमान् त्रिवज्राभेद्यभावितः ।
अधिष्ठानपदं मेऽद्य कुर्वन्तु चित्तवज्रिणः ॥७४॥

दशदिक्संस्थिता बुद्धाः त्रिवज्राभेद्यभाविताः ।
अधिष्ठानपदं मेऽद्य कुर्वन्तु चित्तसम्भवाः[४] ॥७५॥

बुद्धो वा वज्रधर्मो वा वज्रसत्त्वोऽपि वा यदि ।
अतिक्रमेद्यदि मोहात्मा स्फुटेयुर्नात्र संशयः ॥७६॥

इति श्रीसर्वतथागतकायवाक्चित्तरहस्यातिरहस्ये गुह्यसमाजे महागुह्यतन्त्रराजे समयसाधनाग्रनिर्देशपटलो द्वादशोऽध्यायः ।

---

१. ASB समाधौ । २. ASB वाग्° । ३. BO1 omits from तत्रेदं to चित्तसम्भवाः । ४. ASB वज्रिणः । CU. repeats दशदिक्संस्थिता to वाक्पथोद्भवम् after this.

## त्रयोदशः पटलः

अथ भगवन्तः सर्वतथागता ज्ञानवज्राग्रचारिणः सर्वसत्त्वार्थसम्भूता[1] बोधिसत्त्वाश्च धीमन्तः[2] प्रणिपत्य महाशास्तारं मुनिं सत्त्वार्थवज्रिणं पूजां[3]समयतत्त्वज्ञं वज्रघोषमुदीरयन् ।

अहो बुद्ध[4]नयं दिव्यमहो बोधिनयोत्तमम् ।
अहो धर्मनयंशान्तमहो मन्त्रनयं दृढम् ॥१॥

अनुत्पन्नेषु धर्मेषु स्वभावातिशयेषु च ।
निर्विकल्पेषु धर्मेषु[5] ज्ञानोत्पादः प्रगीयते ॥२॥

भाषस्व भगवन् रम्यं सर्वधर्म[6] समुच्चयम् ।
वज्रजापं महाज्ञानं त्रिकायाभेद्यमण्डलम् ॥३॥

प्राप्यन्ते बुद्धज्ञानानि त्रिवज्राभेद्यभावनैः ।
जपन् वज्रप्रयोगेण सर्वबुद्धैरधिष्ठ्यते ॥४॥

कुलानां सर्वमन्त्राणां कायवाक्चित्तलक्षणम् ।
मन्त्रजापं प्रघोषाथ वज्रजापमुदाहरन्[7] ॥५॥

बुद्धाश्च त्र्यध्वसम्भूताः कायवाक्चित्तवज्रिणः ।
संप्राप्ता ज्ञानमतुलं वज्रमन्त्रप्रभावनैः ॥ इति ॥६॥

अथ वज्रधरः शास्ता खवज्रज्ञानसम्भवः ।
कर्ता स्रष्टा वराग्राग्र्यो वज्रजापमुदाहरत्[8] ॥७॥

सर्वमन्त्रार्थजापेषु त्रिवज्राभेद्यलक्षणम् ।
त्रिभेदे[9] वज्रपर्य्यन्तो न्यासोऽयं त्रिवज्रमुच्यते ॥८॥

इत्याह च ।

त्रिविधं स्फुरणं कार्यं कायवाक्चित्तसन्निधौ[10] ।
अनेन जापवज्रेण वज्रचित्तसमो भवेत् ॥९॥

---

१. BOI & CU °सम्भोगाः । २. ASB वामतः । ३. ASB सर्वार्थं° । ४. CU °धर्मं° । ५. ASB & BOI भूतेषु । ६. ASB & BOI °मन्त्र° । ७. ASB श्रृण्वन्तु ज्ञानसागराः । ८. CU °दीरयेत् । ९. ASB °द्य° । १०. ASB सम्विधौ ।

[1]बुद्धानां कायवाक्चित्तं ध्यात्वा पूजाप्र[2]कल्पनम् ।
कर्तव्यं ज्ञानवज्रेण इदं बोधिसमावहम्[3] ॥१०॥
अथवा स्फुरणं कार्यं त्रिभेदेन प्रति प्रति ।
कायवाक्चित्तनैरात्म्यं ज्ञानचित्तेन संस्फ[4]रेत् ॥११॥
उच्चारयन् स्फरेद्वज्रं समाप्तौ संहारमादिशेत् ।
इदन्तत् सर्वबुद्धानां ज्ञानोन्मीलितचक्षुषाम् ॥१२॥
कायवज्राभिसम्बोधिं भावाभावविचारणम् ।
बुद्धकाय इति प्रोक्तः कायजापः स उच्यते ॥१३॥
वाक्यसम्[6]यसम्बोधिः शब्दाशब्दविचारणम् ।
वाग्वज्र इति प्रोक्तो वाग्जापः स उच्यते ॥१४॥
चित्तसमयसम्बोधिः स्थितिवज्रविचारणम् ।
वज्रचित्तमिति प्रोक्तं चित्तजापः स उच्यते ॥१५॥
अथानुगमजापेन निःस्वभावेन चारुणा ।
विचारणं त्र्यध्वबुद्धेभ्यो रत्नजापः स उच्यते ॥१६॥
स्फरणं कायमेघेन बुद्धक्षेत्रात् समन्ततः ।
गमनागमनवज्रार्थममोघजापः स उच्यते ॥१७॥
शृणोति मन्त्राक्षरपदं स्ववज्रैर्घुष्टमण्डलम् ।
क्रोधसमयज्ञानेन क्रोधजापः स उच्यते ॥१८॥
कामार्थं विह्वलीभूतान् सर्वत्राणहितैषिणः ।
सत्त्वान्[8] मोहपदे[9] स्थाप्य मोहजाप इति स्मृतः ॥१९॥
रागवज्रोद्भवं वाचं कायवाक्चित्तसंस्थिताम् ।
सत्त्वान्[10] रागपदे[11] स्थाप्य रागजाप इति स्मृतः ॥२०॥
द्वेषवज्रोद्भवं चित्तं कायवाक्चित्तसंस्थितम् ।
सत्त्वान् द्वेषालये स्थाप्य द्वेषजापः स उच्यते ॥२१॥
त्रिवज्रसमयं तत्त्वं मध्यमं समयवज्रिणम् ।

---

१. These two lines are repeated in CU. २. ASB °प्र° । ३. ASB & BOI त्रिवज्रचित्तसमो भवेत् । ४. BOI °स्म° । ५. ASB °कू° । ६. ASB °याभि° । ७. This line is incomplete in ASB. ८. CU सर्वा° । ९. CU °दं । १०. CU सर्वान् । ११. CU रागोदधि° ।

तदेव सर्वं[1] वज्राणां जापो नपुंसक उच्यते ॥२२॥
वज्राधिपतयः सर्वे रागतत्त्वार्थचिन्तकाः[2] ।
कुर्वन्ति रागजां बोधिं सर्वसत्त्वहितैषिणीम् ॥२३॥
लोचनाद्या महाविद्या नित्यं कामार्थतत्पराः ।
सिध्यन्ति कामभोगैस्तु[3] सेव्यमानैर्यथेच्छतः ॥२४॥
मोहसमयसम्भूता[4] विद्याराजानो वज्रिणः ।
नपुंसकपदे सिद्धाः ददन्ति सिद्धिमुत्तमाम् ॥२५॥
क्रोधा द्वेषालये जाता नित्यं मारणतत्पराः[5] ।
सिद्ध्यन्ति मारणार्थेन सेव्यमानैर्यथेच्छतः[6] ॥२६॥

इत्याह भगवान् महापुरुषसमयः ।

हृदि मध्यगतं चक्रं भावयेत् ज्ञानवज्रिणाम्[7] ।
स्वच्छमण्डलमध्यस्थं चक्रमन्त्रार्थ[8]भावना ॥२७॥
हृदि मध्य[9]गतं वज्रं[10] भावयेत् ज्ञानवज्रिणः ।
वज्रमण्डलमध्यस्थं वज्रमन्त्रार्थभावना ॥२८॥
हृदि मध्यगतं रत्नं भावयेद्रत्नज्ञानिनः ।
रत्नमण्डलमध्यस्थं रत्नमन्त्रार्थभावना ॥२९॥
हृदि मध्यगतं पद्मं भावयेत् पद्मज्ञानिनः ।
धर्ममण्डलमध्यस्थं पद्ममन्त्रार्थभावना ॥३०॥
हृदि मध्यगतं खड्गं भावयेत् खड्गज्ञानिनः ।
समयमण्डलमध्यस्थं खड्गमन्त्रार्थभावना ॥३१॥
सर्वमण्डलपार्श्वेषु सर्वबुद्धान्निवेशयेत् ।
पञ्चरश्मिप्रभेदेन[11] स्फारयन्[12] बोधिमाप्नुते ॥३२॥
स्फुरणं सर्वमन्त्राणां द्विधा भेदेन कीर्तितम् ।
त्रिकायवज्रभेदेन संहारस्फरणं भवेत् ॥३३॥

---

१. CU समय°। २. CU °भावकाः। ३. CU °भोगेन। ४. ASB °सुव्रता। ५. ASB has क्रोधात् द्वेषालये जाता नित्यं सिध्यन्ति मारणाः। ६. This line is incomplete in ASB. ७. CU °चक्रि°। ८. मध्यचक्रार्थं°। ९. BOI वध्म°। १०. BOI चक्रं। ११. CU °प्रदेशेन। १२. ASB & CU °येत्।

कायस्वभावं कायेन चित्तं चित्तस्वभावतः ।
वाचं वाचस्वभावेन पूज्य पूजामवाप्नुयात् ॥३४॥
महामण्डलचक्रेण पञ्चवज्रविभावना ।
मध्ये त्वधिपतिं ध्यात्वा स्वबिम्बं त्रिकायवज्रिणम् ॥३५॥
बिम्बंस्वमन्त्रवज्रस्य मण्डलानां चतुष्टयम्[1] ।
चतुर्वर्णेन संकल्प्य हृदि मन्त्रार्थभावना ॥३६॥
वज्रचतुष्टयं कर्म[2] करोति ध्यानवज्रिणः ।
एषो हि सर्वमन्त्राणां रहस्यं परमशाश्वतम् ॥३७॥
शान्तिके लोचनाकारं पौष्टिके पद्मवज्रिणम् ।
वश्ये वैरोचनपदं वज्रक्रोधोऽभिचारके ॥३८॥
इदन्तत् सर्वमन्त्राणां गुह्यं त्रिकायसम्भवम् ।
निर्मितं ज्ञानवज्रेण क्रियानाटकलक्षितम् ॥३९॥
अभक्तिवादिनः सत्त्वा निन्दकाचार्यवज्रिणे ।
अन्येषामपि दुष्टानामिदं कार्यं प्रचोदनम् ॥४०॥

इत्याह भगवान् महाज्ञानचक्रवज्रः ॥

त्रैधातुकस्थितान् सर्वान् बुद्धकाये[3] विभावयेत् ।
संपुटोद्घाटितान्[4] कृत्वा ततः कर्मप्रसाधनम् ॥४१॥
खधातुमध्यगं वज्रं पञ्चशूलं चतुर्मुखम् ।
सर्वाकारवरोपेतं वज्रसत्त्वं विभावयेत् ॥४२॥
त्राध्वसमयसम्भूतं बुद्धचक्रं विभावयेत् ।
दक्षपाणाविदं कार्यं बुद्धचक्रं महाबलम् ॥४३॥
सत्त्वान् दशदिक् संभूतान् बुद्धकायप्रभेदतः ।
संहृत्य पिण्डयोगेन स्वकाये तान् प्रवेशयेत् ॥४४॥
स्फुरणन्तु पुनः कार्यं बुद्धानां ज्ञानवज्रिणाम् ।
क्रुद्धान् क्रोधाकुलान् ध्यात्वा विकटोत्कटभीषणान् ॥४५॥

---

१. ASB & BOI °ये। २. ASB °यमिदं। ३. BOI स बुद्धान्।
४. ASB सम्पूर्ण घोटितं, CU सम्पुटोद्दोतिकां।

नानाप्रहरणहस्ताग्रान् मारणार्थाग्रचिन्तकान् ।
घातयन्तो महादुष्टान् वज्रसत्त्वमपि स्वयम् ॥४६॥
बुद्धास्त्रिकायवरदाः त्रिवज्रालयमण्डले ।
ददाति सिद्धिं मोहात्मा म्रियते नात्र संशयः ॥
दिनानि सप्तेदं कार्यं बुद्धस्यापि न सिध्यति ॥४७॥

॥ वज्रसमयाज्ञाचक्रो नाम समाधिः ॥

खधातुमध्यगं चक्रं वज्रज्वालाविभूषितम् ।
सर्वाकारवरोपेतं वैरोचनं प्रभावयेत् ॥४८॥
त्र्यध्वसमयसम्भूतान् वज्रसत्त्वान् महायशान् ।
वज्रं स्फुलिङ्गगहनं पाणौ तस्य विभावयेत् ॥४९॥
सत्त्वान् दशदिक्संभूतान् वज्रकायप्रभेदतः ।
संहृत्य रश्मियोगेन स्वकाये तान् प्रवेशयेत् ॥५०॥
स्फुरणं सर्ववज्राणां कार्यं ज्ञानाग्रबुद्धिना[२] ।
शृण्वन्तु सर्वबुद्धात्मा कायवाक्चित्तयोगिनः[३] ॥५१॥
अहं वज्रधरः श्रीमान् आज्ञाचक्रप्रभेदतः ।
वज्रेणादीप्तवपुषा स्फारयामि त्रिकायजान् ॥
लंघयेद्यदि समयं विशीर्यंते न संशयः ॥५२॥

॥ चक्रसमयाज्ञावज्रो नाम समाधिः ॥

खवज्रमध्यगं चिन्तेद्बुद्धमण्डलवज्रिणम् ।
यमान्तकं महाचक्रं खवज्राख्यं प्रकल्पयेत् ॥५३॥
बुद्धांश्च त्र्यध्वसम्भूतान्[४] प्रविष्टांस्त्रिकायमण्डले ।
पुनः संस्फारयेद्बुद्धान् यमान्तकाकारसन्निभान् ॥५४॥
सत्त्वांश्च त्र्यध्वसम्भूतान् रिपूणां दुष्टचेतसाम् ।
घातितान् भावयेत् क्रुद्ध इदं वज्राज्ञामण्डलम् ॥५५॥

॥ सर्वसमयसम्भवयमान्तकसमान्यं[५] त्रिकायाज्ञावज्रो नाम समाधिः ॥

१. ASB °दिशि । २. ASB & CU °वन्धुना । ३. ASB °योगत ।
४. BOI °सत्त्वांश्च । ५. ASB & BOI omit °समान्य° ।

2293

कायवाक्चित्तवज्रैस्तु स्वमन्त्रार्थगुणेन वा ।
अथवा (पौष्ष)[1] समये आज्ञाचक्रप्रवर्तनम्[2] ॥५६॥
रक्षार्थं सर्वमन्त्राणां कार्यं ज्ञानाग्रवज्रिणाम् ।
इदं तत् सर्वबुद्धानां बोधिरक्षार्थमुच्यते ॥५७॥

इत्याह भगवान् बोधिचित्तः ।

खवज्रमध्यगं धर्मं वैरोचनप्रसम्भवम् ।
ध्यात्वा त्रिकायवज्राग्रं[3] आसनन्तु प्रकल्पयेत् ॥५८॥
खधातुं सर्वबुद्धैस्तु परिपूर्णं विभावयेत् ।
मन्त्राक्षरपदं ज्ञानं चित्ताकारं प्रकल्पयेत् ॥५९॥
पुनस्तु संस्फरेद्बुद्धान् चित्तवज्रप्रभावितान्[4] ।
चित्तवज्रमिति कृत्वा त्रिकाये तान् प्रवेशयेत् ॥६०॥

इत्याह भगवान् खवज्रसमयः ॥

॥ वज्रमन्त्ररत्नप्रद्योतकरो नाम समाधिः ॥

सर्वाकारवरोपेतं वज्रसत्त्वं विभावयेत् ।
बुद्धांस्तु क्रमशः स्थाप्य जलस्योपरि चंक्रमेत्[5] ॥
समयोदकप्रयोगेण मूर्ध्नि पादविभावनम् ॥६१॥

इत्याह भगवान् स्वभावशुद्धः ॥ वज्रोदधिपदाक्रान्तो नाम समाधिः ॥

माहेन्द्रमण्डलं ध्यात्वा मध्ये क्रोधकुलं न्यसेत् ।
कर्मवज्रपदाक्रान्तं मूर्ध्नि तस्य विभावयेत् ॥

इत्याह च ॥ सर्वतीर्थप्रवादिस्तम्भनवज्रो नाम समाधिः ॥६२॥

क्रोधाकारं त्रिवज्राग्रान् पीतकिंजल्कसन्निभान् ।
गिरिराज इव सर्वान् ध्यात्वा मूर्ध्नि प्रभावयेत् ॥
बुद्धसैन्यमपि स्तम्भे[6] म्रियते नात्र संशयः ॥६३॥

---

१. ASB °त्पोष°, BOI पीष°, CU °ल्लोष° ( ? ) । २. ASB °प्रयोजनम् । ३. ASB त्रिकायं, CU त्रिवज्राग्रं । ४. CU °विना । ५. CU कल्पयेत् । ६. BOI °था° । ७. BOI & CU परवा° । ८. BOI °संघ° । ९. ASB; BOI & CU त्रस्ते ।

इत्याह भगवान् सर्वतथागतकायवाक्चित्तसम्भवः ॥ सर्वसैन्यस्तम्भनो नाम समाधिः ॥

रिपुसन्त्रासनसमये इदं ध्यानं प्रकल्पयेत् ।
अतिक्रमेद्यदि बुद्धः स्फुटते नात्र संशयः ॥६४॥

इत्याह भगवान् त्रिवज्रसमयः ।

हूँकारकीलकं ध्यात्वा पञ्च शूलप्रमाणतः ।
वज्रकीलं कृतं तेन हृदये तद्विभावयेत् ॥
बुद्धसैन्यमपि क्रुद्धं नाशं गच्छेन्न संशयः ॥६५॥

॥ रिपुमहापहारो[1] नाम समाधिः ॥

नगरे वाऽप्यथवा ग्रामे विषये वा प्रयोजयेत् ।
अनेन नित्यं भवेच्छान्तिः सर्वरोगविवर्जिता ॥६६॥

अन्तरिक्षगतं वज्रं पञ्चशूलं प्रभावयेत् ।
कल्पोद्दाहमिव ध्यात्वा पुनः संहारमादिशेत् ॥६७॥

स्फुरणं च पुनः कार्यं रत्नचिन्तामणिप्रभैः ।
भावयेद्धर्ममेघान्वै[2] अभिषेकं समादिशेत् ॥६८॥

अनेन ध्यानवज्रेण दुष्पूरोऽपि प्रपूर्यते[3] ।
स भवेच्चिन्तामणिः श्रीमान् दानवज्रप्रसाधकः ॥
बुद्धमेघैर्महाधर्मैर्वज्रसत्त्वैश्च तत् स्फुरेत् ॥६९॥

त्रिकल्पासंख्येयस्थानं सर्वबुद्धैरधिष्ठ्यते ।
इदं तत् सर्वबुद्धानां कायगुह्यमनाविलम् ॥७०॥

॥ सर्वसत्त्वरोगापनयनवज्रसम्भवो नाम समाधिः ॥

ध्यानवज्रेण समादानं यत्र स्थाने समाचरेत् ।
अनेन ध्यानयोगेन तिष्ठन् बुद्धैरधिष्ठ्यते ॥७१॥

ध्वजामृतमहाराजं वज्रकीलं प्रभावयेत् ।
निखनेद्दशदिक्चक्रं स्फुलिङ्गज्वालसन्निभम् ॥७२॥

---

१. BOI & CU °मोहापहो । २. ASB & BOI °संघान् ।
३. CU °रयेद् ।

इत्याह च ॥ जगद्विजयशान्तिवज्रो नाम समाधिः ॥

खधातुमध्यगं चिन्तेच्छान्तिमण्डलमुत्तमम् ।
बिम्बं वैरोचनं ध्यात्वा हृदयेऽथ प्रविन्यसेत् ॥७३॥
खधातुं लोचनाग्रैश्च[1] परिपूर्णं विभावयेत् ।
संहृत्य रश्मिपिण्डेन आरम्भस्य निपातने[2] ॥७४॥
रोमकूपाग्रविवरैर्बुद्धमेघान् स्फरेद्व्रती[3] ।
अभिषेकं तदा तस्य बुद्धमेघा ददन्ति हि ॥
अनेन वज्रसमयः श्रीमान् भवति तत्क्षणात् ॥७५॥

॥ बुद्धसमयमेघ[4]व्यूहो नाम समाधिः ॥

खवज्रमध्यगं चिन्तेन्माहेन्द्रमण्डलं शुभम् ।
बिम्बं धर्मपरं[5] ध्यात्वा हृदये वाऽथ विन्यसेत् ॥७६॥
खधातुभवनं[6] रम्यं पाण्डराख्यैः प्रपूरयेत् ।
[7]संहरेद्रश्मिपिण्डेन रत्नचिन्तामणिप्रभम् ॥७७॥
कायवाक्चित्तनिलयेऽर्थिने[8] तच्च निवेदयेत् ।
रोमकूपाग्रविवरे रत्नमेघान् स्फरेद्व्रती ॥७८॥
भावयेद्धर्ममेघान्वै अभिषेकं समादिशेत् ।
अनेन ध्यानवज्रेण दुष्पूरोऽपि प्रपूर्यते[9] ।
स भवेच्चिन्तामणिः श्रीमान् दानवज्रप्र[10]साधकः ॥७९॥

॥ धर्मसमयमेघव्यूहो नाम समाधिः ॥

खधातुमध्यगं चिन्तेद्वज्रचन्द्रार्क[11] मण्डलम् ।
बिम्बं खवज्रधर्माग्रमर्थिनो हृदि विन्य[12]सेत् ॥८०॥
बुद्धैश्च बोधिसत्त्वैश्च पूरिपूर्णं खमण्डलम् ।
पञ्चरश्मिप्रयोगेण तेजस्तत्र निपातयेत् ॥८१॥

---

१. ASB & BOI °स्तु । २. ASB & CU °तयेत् । ३. CU बुधः । ४. CU omits °मेघ° । ५. ASB °वरं° । ६. ASB & BOI °ने । ७. Two lines from here are repeated in BOI and CU. ८. CUI °र्थिनेदं, CU 2 & ASB °र्थिनं तु । ९. BOI °पूरयेत् । १०. CU °प्रार्थं° । ११. G.O.S. °र्थं । १२. ASB हृदये ।

स भवेत्तत्क्षणादेव सर्वबुद्धमनोज्ञकः ।
मञ्जुश्रीतुल्यसङ्काशः स भवेत्पर[1]कर्मकृत् ॥८२॥
ददाति च प्रहृष्टात्मा अभिषेकं महोत्सुकः ।
वशमानयति जनान् सर्वान्[2] दर्शनेनैव चोदितान्[3] ॥८३॥

॥ रत्नसमयमेघव्यूहो नाम समाधिः ॥

खवज्रं राक्षसैः क्रूरैश्चण्डैः क्रोधसुदारुणैः ।
शृगालैर्विविधैः काकैर्गृध्रैः श्वानैः प्रभावयेत् ॥८४॥
आग्नेयमण्डलस्थं तु[4] भावयेद् रिपवः सदा ।
अपकारी सर्वबुद्धानां ध्यात्वा योगं प्रयोजयेत् ॥८५॥
अन्त्रमज्जारुधिराद्यं सर्वाकृष्टं प्रभावयेत् ।
नानाप्रहरणधरैराक्रान्तो[5] म्रियते रिपुः ॥८६॥
बुद्धो वज्रधरो वापि यद्यनेन प्रभाव्यते ।
पक्षाभ्यन्तरपूर्णेन म्रियते नात्र संशयः ॥८७॥

॥ वज्रमेघसमयव्यूहो नाम समाधिः ॥

त्रिमुखं वैरोचनं चिन्तेच्छरत्काण्डसमप्रभम् ।
सितकृष्णमहारक्तं जटामुकुटमण्डितम् ॥८८॥
त्रिमुखं वज्रिणं चिन्तेत्कृष्णरक्तसिताननम् ।
जटामुकुटधरं दीप्तं लोकधातुसमाकुलम् ॥८९॥
त्रिमुखं रागिणं चिन्तेद्रक्तकृष्णसिताननम् ।
जटामुकुटसंभोगं भावयन् सिध्यते ध्रुवम् ॥९०॥
चक्रं वज्रं महापद्मं सव्य[6]पाणौ विभावयेत् ।
षड्भुजान् भावयेद्वज्रान्नानाप्रहरणधरान् शुभान् ॥९१॥
लोचनां त्रिमुखां चिन्तेत् सर्वसत्त्वहितैषिणीम् ।
सितकृष्णमहारक्तां चारुरूपां विभावयेत् ॥९२॥

---

१. ASB °द° । २. ASB & CU जगत् सर्वं° । ३. ASB & CU °तः । ४. ASB लस्तत्र । ५. ASB & BOI add प्रभावयेत् । ६. ASB °दक्षिण° ।

खवज्रनेत्रीं[1] महाराज्ञीं त्रिमुखां भावयेत्सदा ।
कृष्णरक्तसिताकारां चारुरूपां विभावयेत् ॥९३॥
वाग्वज्रीं च महाराज्ञीं त्रिमुखां भावयेत्सदा ।
रक्तसितकृष्णाकारां चारुवर्णां विभावयेत्[2] ॥९४॥
वज्रोत्पलधरां विद्यां त्रिमुखां कान्तिसुप्रभाम् ।
पीतकृष्णसिताकारां भावयन् ज्ञानमाप्नुयात् ॥९५॥
यमान्तकं महाक्रोधं त्रिमुखं क्रुद्धसुप्रभम्[3] ।
भयस्यापि भयं तीक्ष्णं कृष्णवर्णं विभावयेत् ॥९६॥
अपराजितं महाक्रोधमट्टाट्टहासनादिनम् ।
त्रिमुखं स्फुलिङ्गगहनं विस्फुरन्तं विचिन्तयेत् ॥९७॥
हयग्रीवं महाक्रोधं कल्पोद्दाहमिवोद्भवम् ।
त्रिमुखं दुष्टपदाक्रान्तं भावयेद्योगतः सदा ॥९८॥
वज्रामृतं महाक्रोधं स्फुलिङ्गाकुलचेतसम् ।
दीप्तवज्रनिभं क्रूरं भयस्यापि भयप्रदम्[4] ॥९९॥
टक्किराजं महाक्रोधं त्रिमुखं त्रिभयप्रदम् ।
चतुर्भुजं भयस्याग्रं टक्किराजं प्रभावयेत् ॥१००॥
महाबलं महावज्रं त्रैलोक्यार्थार्थधारिणम्[5] ।
नाशकं सर्वदुष्टानां त्रिमुखं भावयेत्सदा[6] ॥१०१॥
नीलदण्डं[7] महाक्रोधं[8] त्रैलोक्यस्य भयप्रदम्[9] ।
त्रिमुखं त्रिवज्रसम्भूतं तीक्ष्णज्वालं प्रभावयेत् ॥१०२॥
वज्राचलं महाक्रोधं केकरं वज्रसंभवम् ।
खड्गपाशधरं सौम्यं त्रिमुखं भावयेद्व्रती ॥१०३॥
एकाक्षरं[10] महोष्णीषं विस्फुरन्तं समन्ततः ।
त्रिमुखं वज्रिणं[11] दीप्तं भावयेद् ध्यानमण्डले ॥१०४॥

---

१. °ध्र ASB नेत्रीं । २. These two lines are repeated in ASB and CU. ३. ASB °कुल° । ४. BOI भयंकरं । ५. ASB °क्यथातुहारिणम्, CU °क्यार्थान्तहारिणम् । ६. In BOI and CU the descriptions of वज्रामृत and टक्किराज follow this line. ७. ASB adds च । ८. CU °कायं । ९. CU भयंकरं । १०. BOI °न्तरं । ११. CU चक्रिणं ।

सुम्भं ज्ञानाग्रधरं क्रूरं भयोदधिसमप्रभम् ।
त्रिमुखं ज्वालार्चिवपुषं भावयेद् ध्यानसुप्रभम् ॥१०५॥
तेजोराशिजयोष्णीषं ये चान्ये मन्त्रवज्रिणः ।
एभिः समयसम्भोगैर्भावनीयाः प्रति प्रति ॥१०६॥
अमितानि समाधीनि मन्त्राणां समुदाहृताः[१] ।
एकैकस्य तु क्रोधस्य बहुत्वे तु विशिष्यते ॥१०७॥
खधातुमध्यगं चिन्तेत् स्वच्छमण्डलमुत्तमम् ।
बुद्धबिम्बं प्रभावित्वा वैरोचनं प्रभावयेत् ॥१०८॥
स्वच्छं चन्द्रनिभं शान्तं नानारश्मिसमप्रभम् ।
आदर्शमिव संभूतं त्रैधातुकस्य मण्डलम् ॥१०९॥
सर्वालङ्काररचितं ध्यात्वा बोधिं स पश्यति ।
अनेन बुद्धमाहात्म्यं सर्वसत्त्व[२]वशङ्करम् ॥११०॥
प्राप्यते जन्मनीहैव ध्यानवज्रप्रभावनैः ।
॥वैरोचनसमय[३]संभवचारुवज्रो नाम समाधिः ॥१११॥
खधातुमध्यगं चिन्तेद्वज्रमण्डलमुत्तमम् ।
बुद्धबिम्बं प्रभावित्वा वज्रसत्त्वं विभावयेत् ॥११२॥
स्वच्छकायनिभं क्रुद्धं नानाज्वालसमप्रभम् ।
सर्वाकारवरोपेतं सर्वालङ्कारभूषितम् ॥११३॥
ध्यात्वा ज्ञानपदं शान्तं लघुवज्रत्व[४]माप्नुयात् ।
अनेन वज्रमाहात्म्यं सर्वसत्त्ववशंकरम् ॥११४॥
प्राप्यते जन्मनीहैव ध्यानवज्रप्रयोगतः[५] ।
॥सर्ववज्रसमयसंभवचारुवज्रो नाम समाधिः ॥११५॥
खवज्रमध्यगं चिन्तेद्धर्ममण्डलमुत्तमम् ।
बुद्धबिम्बं प्रभावित्वा धर्मसत्त्वं[६] विचिन्तयेत् ॥११६॥
स्वच्छकायधरं सौम्यं सर्वालङ्कारभूषितम् ।
रश्मिमेघमहावज्रं[७] विस्फुरन्तं प्रभावयेत् ॥११७॥

---

१. BOI °दीरयेत् । २. GOS °लोक° । ३. ASB omits °समय° । ४. ASB °सत्त्व° । ५. ASB & CU °प्रचोदितः । ६. ASB तत्त्वं । ७. GOS °चक्रं ।

अनेन धर्ममाहात्म्यं त्रिकायामेघसम्भवम् ।
प्राप्यते जन्मनीहैव ज्ञानोदधिविभूषणम् ॥११८॥

॥ धर्मसत्त्व[1]समयसंभवचारुवज्रो नाम समाधिः ॥

खवज्रमध्यगं चिन्तेच्चक्र[2]मण्डलमुत्तमम् ।
बुद्धबिम्बं प्रभावित्वा लोचनाग्रीं विभावयेत् ॥११९॥
चारुवक्त्रां विशालाक्षीं नानाभरणभूषिताम् ।
सर्वलक्षणसम्पूर्णां त्रिकायाग्र[3]धारिणीम्[4] ॥१२०॥
पाणौ प्रभावयेच्चक्रं त्रैधातुकवशङ्करम् ।
सर्वसिद्धिकरं ज्ञानं चक्रं चिन्तामणिप्रदम् ॥१२१॥

॥ लोचनासमयाज्ञानहस्ताग्रवती नाम समाधिः ॥

खवज्रमध्यगं चिन्तेच्चन्द्र[5]मण्डलमुत्तमम् ।
बुद्धबिम्बं प्रभावित्वा खवज्रांग्रीं प्रभावयेत् ॥१२२॥
चारुवक्त्रां विशालाक्षीं नीलोत्पलसमप्रभाम् ।
सर्वलक्षणसम्पूर्णां खमायाग्रीं विभावयेत् ॥१२३॥
पाणौ नीलोत्पलं चक्रं[6] त्रैधातुकनमस्कृतम् ।
बुद्धबोधिकरं दिव्यं रहस्यं सिद्धिवज्रिणाम् ॥१२४॥

॥ खभानुरश्मिमेघवज्राह्लादनवती नाम समाधिः ।

खवज्रमध्यगं चिन्तेद्धर्ममण्डलमुत्तमम् ।
बुद्धबिम्बं प्रभावित्वा धर्मवज्रीं प्रभावयेत् ॥१२५॥
चारुवक्त्रां विशालाक्षीं पद्मरागेन्द्रसन्निभाम् ।
मायाजालाग्रसंभूतां रागरक्तवरप्रियाम् ॥१२६॥
सर्वलक्षणसम्पूर्णां सर्वालङ्कारभूषिताम् ।
पाणौ रक्तोत्पलं दिव्यं सर्वबुद्धप्रभावितम् ॥१२७॥
धर्मज्ञानाकरं दिव्यं गुह्यं समयवज्रिणाम् ।

---

१. ASB °वज्र° २. ASB चन्द्र° । ३. ASB त्रिमायाग्र°, CU त्रियानाग्र° ।
४. BOI & CU add बुद्धबिम्बं प्रभावित्वा खवज्राग्रीं प्रभावयेत् । after this line
५. CU वज्र° । ६. CU रक्तं ।

धर्मसमयतत्त्वाभिसम्बोधिदर्शनवज्रो नाम समाधिः ॥

खवज्रमध्यगं चिन्तेत् सिद्धिमण्डलं[1]मुत्तमम् ।
बुद्धबिम्बं प्रभावित्वा ताराग्रीं तु प्रभावयेत् ॥१२८॥
चारुवक्त्रां विशालाक्षीं नानाभरणभूषिताम् ।
पीतवर्णनिभां ध्यात्वा स्त्रीशाठ्य[2]मदनोत्सुकाम् ॥१२९॥
पाणौ प्रभावयेत् व्यक्तमुत्पलं पीतसन्निभम् ।
वज्रसमाधिसम्भूतं सर्वसत्त्वनमस्कृतम् ॥१३०॥

॥ समयताराग्रवती नाम समाधिः ॥

खवज्रमध्यगं चिन्तेत् सूर्यमण्डलमुत्तमम् ।
बुद्धबिम्बं प्रभावित्वा यमान्तकाग्रं विभावयेत् ॥१३१॥
स्फुलिङ्गगहनं दीप्तं संक्रुद्धं भव[3]मण्डलम् ॥
रक्ताक्षं[4] दंष्ट्राविकटं खड्गपाणिं विभावयेत् ॥१३२॥
मुकुटे वैरोचनपदं ध्यात्वा तुष्यन्ति वज्रिणः ।
एषो हि सर्वक्रोधानां समयो ज्ञानवज्रिणाम् ॥१३३॥

॥ यमान्तकस्फुरणावभास[5]व्यूहो नाम समाधिः ॥

खवज्रमध्यगं चिन्तेत् सूर्यमण्डलमुत्तमम् ।
बुद्धबिम्बं प्रभावित्वाऽपराजिताख्यं प्रभावयेत् ॥१३४॥
स्फुलिङ्गगहनं दीप्तं सर्प[6] मण्डितमेखलम् ।
विकरालं विकटवक्त्रं[7] सितवर्णं प्रभावयेत् ॥१३५॥
मुकुटेऽक्षोभ्यसमयं ध्यात्वा तुष्यन्ति वज्रिणः ।
एषो हि सर्वक्रोधानां समयो ज्ञानवज्रिणाम् ॥१३६॥

अपराजितवज्र[8]व्यूहो नाम समाधिः ॥

खवज्रमध्यगं चिन्तेत् सूर्यमण्डलमुत्तमम् ।
बुद्धबिम्बं प्रभावित्वा हयग्रीवं[9] प्रभावयेत् ॥१३७॥

---

१. BOI °लक्षण° । २. ASB त्रिसाध्य° । ३. ASB सूर्यं° । ४. ASB चक्राक्षं । ५. ASB °सन° । ६. ASB सूर्यं° । ७. CU° त्त्रं । ८. BOI omits °वज्र° । ९. BOI & CU °वज्रं° ।

स्फुलिङ्गगहनं क्रुद्धं[1] विस्फुरन्तं समन्ततः ।
सर्वदुष्टपदाक्रान्तं रक्तवर्णं[2] विभावयेत् ॥१३८॥
मुकुटेऽमितसम्बुद्धं ध्यात्वा तुष्यन्ति वज्रिणः ।
एषो हि सर्वक्रोधानां समयो[3] ज्ञानवज्रिणाम् ॥१३९॥

॥ हयग्रीवोत्पत्ति[4] सम्भवव्यूहो नाम समाधिः ॥

खवज्रमध्यगं चिन्तेत् सूर्यमण्डलमुत्तमम् ।
बुद्धबिम्बं प्रभावित्वा वज्रामृतं प्रभावयेत् ॥१४०॥
स्फुलिङ्गगहनं दीप्तं वज्रमेघसमाकुलम् ।
क्रुद्धं सुरोषणं कृष्णं तीक्ष्णदंष्ट्रं प्रभावयेत् ॥१४१॥
मुकुटेऽक्षोभ्यसमयं ध्यात्वा तुष्यति क्रोधधृक् ।
एषो हि सर्वक्रोधानां समयो दुरतिक्रमः ॥१४२॥

॥ अमृतसमयसम्भववज्रो नाम समाधिः ॥

खवज्रमध्यगं चिन्तेत्सूर्यमण्डलमुत्तमम् ।
बुद्धबिम्बं विभावित्वा टक्किसत्त्वं प्रभावयेत् ॥१४३॥
क्रूरं विकृतकेशाग्रं[5] भयस्यापि भयङ्करम् ।
सर्वालङ्कारसम्पूर्णं भावयेद्वज्रसुप्रभम्[6] ॥१४४॥
मुकुटेऽक्षोभ्यसमयं ध्यात्वा तुष्टिप्रवर्धनम्[7] ।
एषो हि सर्वक्रोधानां समयो दुरतिक्रमः ॥१४५॥

॥ ध्यानवज्रसम्बोधिरतिर्नाम समाधिः ॥

खवज्रमध्यगं चिन्तेत् सूर्यमण्डलमुत्तमम् ।
बुद्धबिम्बं प्रभावित्वा महाबलं प्रभावयेत् ॥१४६॥
स्फुलिङ्गगहनं दीप्तं त्रिवज्रालयमण्डलम् ।
क्रूरं पाशधरं क्रुद्धं भावयेद्बलवज्रिणम् ॥१४७॥
मुकुटेऽक्षोभ्यसमयं ध्यात्वा तुष्टिप्रवर्धनम् ।
एषो हि सर्वक्रोधानां समयो दुरतिक्रमः ॥१४८॥

---

१. ASB दीप्तं । २. ASB °बिम्बं । ३. CU वज्रधारिणाम्, BOI °चारिणाम् । ASB °त्पादन° । ५. ASB देहो° । ६. ASB °मुत्तमम् । ७. CU मर्दनं । BOI पाप° ।

॥ त्रिबलवज्रो[1] नाम समाधिः ॥

खवज्रमध्यगं चिन्तेत् सूर्यमण्डलमुत्तमम् ।
बुद्धबिम्बं प्रभावित्वा नीलवज्रं प्रभावयेत् ॥१४९॥

कृष्णरूपधरं तीक्ष्णं कृष्णोदधिविवर्धनम् ।
स्फुलिङ्गगहनं दीप्तं भावयेद्दण्डवज्रिणम् ॥१५०॥

मुकुटेऽक्षोभ्यसमयं ध्यात्वा तुष्टि[2]प्रवर्धनम् ।
एषो हि सर्वक्रोधानां समयो दुरतिक्रमः ॥१५१॥

॥ वज्रदण्डसमयाग्रवती नाम समाधिः ॥

खवज्रमध्यगं चिन्तेत्सूर्यमण्डलमुत्तमम् ।
बुद्धबिम्बं प्रभावित्वा अचलाग्रं विभावयेत् ॥१५२॥
केकरं विकृतं क्रुद्धं पाशखड्गधराकुलम्[3] ।
स्फुलिङ्गगहनं दीप्तं भावयेदचलवज्रिणम् ॥१५३॥
मुकुटेऽक्षोभ्यसमयं ध्यात्वा तुष्टिप्रवर्धनम् ।
एषो हि सर्वक्रोधानां समयो दुरतिक्रमः ॥१५४॥

॥ खवज्रधातु[4]समयपदाक्रान्तो नाम समाधिः ॥

॥ खवज्रमध्यगं चिन्तेत्सूर्यमण्डलमुत्तमम् ।
बुद्धबिम्बं प्रभावित्वा विद्याचक्रं विभावयेत् ॥१५५॥
सर्वलक्षणसम्पूर्णं चक्र[5]ज्वालापरिवृतम् ।
उष्णीषचक्रसमयं विस्फुरन्तं प्रभावयेत् ॥१५६॥
मुकुटेऽक्षोभ्यसमयं ध्वात्वा तुष्टिप्रवर्धनम् ।
एषो हि सर्वक्रोधानां समयो दुरतिक्रमः ॥१५७॥

॥ उष्णीष[6]विद्याचल[7]चक्रो नाम समाधिः ॥

खवज्र[8]मध्यगं चिन्तेत्सूर्यमण्डलमुत्तमम् ।
बुद्धबिम्बं विभावित्वा वज्रसुम्भं प्रभावयेत् ॥१५८॥

---

१. ASB त्रिवज्रमहावलो । २ CU पुष्टि° । ३. ASB °धराङ्कुशं । ४. CU omits °धातु° । ५. BOI वज्र° । ६. ASB adds °समय° । ७. ASB °धर° । ८. ASB °धातु° ।

तीक्ष्णज्वालार्चिर्वपुषं स्फुरन्तं मेघवज्रिणम् ।
वज्रहस्तं महाज्वालं भावयन् सिद्धिमाप्नुयात् ॥१५९॥

मुकुटेऽक्षोभ्यसमयं ध्यात्वा तुष्टिप्रवर्धनम् ।
एषो हि सर्वक्रोधानां समयो दुरतिक्रमः ॥१६०॥

॥ वज्रसमयशुम्भवज्रो नाम समाधिः ॥

निरोधक्रोधचक्रेण बुद्धचक्रनिषेविणा[१] ।
समाधिवज्रज्ञानानि सिध्यन्ते वज्रमण्डलात् ॥१६१॥

इति श्रीसर्वतथागतकायवाक्चित्तरहस्यातिरहस्ये गुह्यसमाजे महागुह्यतन्त्रराजे समयव्यूहतत्त्वार्थभावनासम्बोधिपटलस्त्रयोदशोऽध्यायः ।

---

१. ASB °वर्णं ।

## चतुर्दशः पटलः

अथ भगवान् सर्वतथागतसमयाधिपतिर्महावज्रधरः शान्ति[1]समयाग्रं नाम समाधिं समापद्येमां सर्वतथागतभार्यां कायवाक्चित्तवज्रेभ्यो निश्चारयामास ।

॥ ओं रु रु स्फुरू ज्वल तिष्ठ सिद्ध[2]लोचने सर्वार्थसाधनि स्वाहा ॥

अथास्यां गीतमात्रायां सर्वसम्पन्मनीषिणः ।
तुष्टा हर्षं समापेदे बुद्धवज्रमनुस्मरन् ॥१॥

बुद्धानां शान्तिजननी सर्वकर्मप्रसाधिनी ।
मृतसञ्जीवनी प्रोक्ता वज्रसमयचोदनी ॥२॥

इत्याह च ॥

अथ भगवांस्त्रिकायसमयक्रोधवज्रः भावाभावसमयवज्रं नाम समाधिं समापद्येमां सर्ववज्रधराग्रमहिषीं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ।

॥ ओं शङ्करे शान्तिकरे घुट्ट घुट्ट घुट्टनि घातय घातय[3] घुट्टनि स्वाहा[4] ॥

अथास्यां गीतमात्रायां त्रिवज्राभेद्यवज्रिणः ।
उत्फुल्लचारुनयना वज्रचित्तमनुस्मरन् ॥३॥

रक्षावज्रप्रयोगेषु नित्यं कर्मप्रसाधनी ।
महावज्रभयार्तानां नित्यं बलकरी स्मृता ॥४॥

अथ भगवान् महाराग[5]समयावलोकनं नाम समाधिं समापद्येमां धर्मकायाग्रभार्यां स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास[6] ।

॥ ओं कटे विकटे[7] कटङ्कटे करोटवीर्ये स्वाहा ॥

अथास्यां गीतमात्रायां वज्रधर्माग्र[8]धारिणः ।
तुष्टा ध्यानं समापेदे वज्रधर्ममनुस्मरन् ॥५॥

---

१. CU शास्ता । २. CU रो० । ३. BOI omits ४. ASB gives घुट्ट घुट्टनि स्वाहा only. ५. ASB °ज° । ६. CU °रयत् । ७. ASB & CU add निकटे । ८. GOS °चा° ।

धर्मपुष्टिं बलं नित्यं महाकोशवती सदा ।
करोति जापमात्रेण वाग्वज्रस्य वचो यथा[1] ॥६॥

अथ भगवान् समन्तसम्भववज्रं नाम समाधिं समापद्येमां समयसत्त्वाग्रभार्यां[2] स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ।

॥ ओँ तारे तुत्तारे तुरे स्वाहा ॥

अथास्यां गीतमात्रायां सर्वबुद्धा महात्मजाः ।
हर्षिता ज्ञानमापेदे वज्रकायमनुस्मरन् ॥७॥

बुद्धवज्रमहासैन्यं सत्त्वधातुं समन्ततः ।
करोति दासवत् सर्वं निश्चेष्टं वशकृत् क्षणात् ॥८॥

इत्याह च ।

अथ भगवान् सर्वतथागतकायवाक्चित्तवज्रस्तथागतो विमलरश्मिमेघव्यूहवज्रं[3] नाम समाधिं समापद्येमं वज्रयमान्तकमहाक्रोधं[4] स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास[5] ।

॥ नमः समन्तकायवाक्चित्तवज्राणाम् । ओँ ख ख खाहि खाहि सर्वदुष्टदमक[6] असिमुसलपरशुपाशहस्त चतुर्मुख चतुर्भुज षट्चरण आगच्छागच्छ[7] सर्वदुष्टप्राणहारिणे महाविघ्नान्तक[8] विकृतानन सर्वभूतभयङ्कर अट्टाट्टहासनादिने व्याघ्रचर्मनिवसने[9] कुरु कुरु सर्वकर्माणि छिन्द छिन्द सर्वमन्त्रान् भिन्द भिन्द परमुद्राण्[10]आकर्षय आकर्षय सर्वभूतान् निर्मथ निर्मथ सर्वदुष्टान् प्रवेशय प्रवेशय मण्डलमध्ये वैवस्वतजीवितान्तकर कुरु कुरु मम कार्यं[11] दह दह पच पच मा विलम्ब विलम्ब समयमनुस्मर हूँ हूँ फट् फट् स्फोटय स्फोटय सर्वाशापरिपूरक सर्वान् नाशय रिपून् कर कर[12] हे हे भगवन् किं चिरायसि मम सर्वार्थान् साधय साधय स्वाहा ।

अथास्मिन् भाषितमात्रे सर्वे बुद्धा महायशाः ।
भीताः संत्रस्तमनसो वज्रचित्तमनुस्मरन् ॥९॥

---

१. ASB °धरो यथा । २. CU °त° । ३. BOI omits °वज्रं and ASB omits °व्यूह° । ४. BOI °वज्र° । ५. ASB & BOI °येत् । ६. ASB adds °सत्त्व° । ७. ASB गच्छ गच्छ । ८. ASB विघ्नघातक । ९. CU निवेशने । १०. ASB °मन्त्रा° । ११. BOI °यं । १२. ASB adds सर्वाशापरिपूरक ।

कपालं निर्व्रणं प्राप्य चारुरूपं मनीषिणम् ।
पादाक्रान्तगतं कृत्वा मन्त्रमेनमनुस्मरन्[१] ॥१०॥

लोचनां मामकीं चापि महावज्रकुलोच्चयाम् ।
द्वित्रीन् वारान् समुच्चार्य ध्रुवमाकृष्यते क्षणात् ॥११॥
इत्याह च भगवान्[२] बोधिचित्तवज्रः ।

अथ भगवान् वैरोचनवज्रस्तथागतः समयरश्मिघ[३]नाग्रं नाम समाधिं समापद्येममममृत-समयवज्रक्रोधं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ।

नमः समन्तकायवाक्चित्तवज्राणाम् । नमो वज्रक्रोधाय महादंष्ट्रोत्कटभैरवाय असिमुसलपरशुपाशं[४]गृहीतहस्ताय ओं अमृतकुण्डलि ख ख खाहि खाहि तिष्ठ तिष्ठ बन्ध बन्ध हन हन दह दह गर्ज्ज गर्ज विस्फोटय विस्फोटय सर्वविघ्नविनायकान् महागणपति-जीवितान्तकराय[५] स्वाहा ॥

अथास्मिन् भाषितमात्रे सर्वे बुद्धा महायशाः ।
मूर्च्छिता भयमापेदे वज्रकायं[६]मनुस्मरन् ॥१२॥

सर्वमन्त्रप्रयोगेषु वज्रोच्चाटनकर्मणि ।
उच्चाटयति विधिना बुद्धसैन्यमपि स्वयम् ॥१३॥

अथ भगवान् रत्नकेतुस्तथागतो बुद्धरश्मिवज्रं नाम समाधिं समापद्येमं वज्रा-पराजितमहा[७]क्रोधं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ।

॥ नमः समन्तकायवाक्चित्तवज्राणाम् । ओं हूँ जिनरिटि हे[८] हूँ हूँ फट् फट्[९] स्वाहा ॥

अथास्मिन् गीत[१०]मात्रे तु सर्वे बुद्धा महायशाः[११] ।
भीताः सन्त्रस्तमनसो बोधिचित्तमनुस्मरन् ॥१४॥

राक्षसव्यालक्रूरेषु महाभयसमाकुले ।
करोति विधिवत्कर्म वज्रचित्तमनुस्मरन्[१२] ॥१५॥

---

१. CU स्मरेत् । २. BOI & CU omit °बोधि before चित्त । ३. ASB गह° । ४. CU पाशपरशु , पशुं in ASB. ५. BOI °काय । ६. ASB °म । ७. BOI & CU omit ८. CU °रितिह, ASB °रिटिटादा । ९. BOI omits १०. ASB भाषित° । ११. ASB °त्मजाः । १२. CU प्रयुञ्जनात्, ASB प्रपूजनात् ।

अथ भगवानमितायुस्तथागतोऽमितसम्भववज्रं नाम समाधिं समापद्येमं पद्मसम्भवं[१]वज्रक्रोधं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ॥

नमः समन्तकायवाक्चित्तवज्राणाम् । ओं हूँ हूँ हूँ तरुल विरुल सर्वविषघातक ज्वलितविस्फुलिङ्गाट्टाट्टहास केसरिसटाटोपटङ्कारवज्रखुर[२]निर्घातनं[३]चलितवसुधातल निश्वास-मारुतो[४]त्क्षिप्तधरणीधर भीषणाट्टाट्टहास अपरिमितबलपराक्रम आर्यगणभीतभूतगणाध्युषित बुद्ध बुद्ध हयग्रीव खाद खाद परमन्त्रान् छिन्द छिन्द सिद्धिं मे दिशं[५] आवेशयं सर्व-ज्वर[६]पिषासादीन् सर्वग्रहेष्वप्रतिहतो भव वज्रदंष्ट्र किं चिरायसि इमं सर्वं[७] दुष्टग्रहं दुष्टसङ्घं[८] वा धुन धुन विधुन विधुन मथ मथ मट मट घातय घातय बन्ध बन्ध बुद्धधर्मसङ्घानुज्ञात-कर्म कुरु शीघ्रम् । हयग्रीवाय फट्[९] वज्रगात्राय फट् वज्रनेत्राय फट् वज्रदंष्ट्राय फट् वज्रखुराय[१०] फट् वज्रखु[११]रनिर्घातनाय फट् परमन्त्रविनाशाय फट् त्रैलोक्यभयङ्कराय फट् सर्वकर्मेष्वप्रतिहताय फट् वज्रकुलसन्त्रासनाय फट् हूँ हूँ हूँ फट् फट् फट् स्वाहा ॥

अथास्मिन् विनिःसृत[१२] मात्रे धर्मवज्रा महाप्रजाः ।
भीताः संमूर्च्छमापेदे ज्ञानराजमनुस्मरन् ॥१६॥

खधातुं विषसम्पूर्णं वज्रहालाहलप्रभम् ।
करोति निर्विषं सर्वं[१३] क्रोधराजप्रचोदनैः ॥१७॥

इत्याह च ।

अथ भगवान् अमोघसिद्धिस्तथागतः अमोघसमयं[१४] सम्भवकेतुवज्रं नाम समाधिं समापद्येमं नीलवज्रं[१५] दण्डक्रोधराजं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ।

॥ नमः समन्तकायवाक्चित्तवज्राणाम् । ओं एह्येहि भगवन् नीलवज्रदण्ड तुरु तुरु हुलु हुलु हाहा[१६] गुलु गुलु गुलापय गुलापय क्रम क्रम भगवन् वायुवेगेन भूतान् शीघ्रं दह दह दर दर वह वह[१७] पच पच मथ मथ पातय[१८] पातय मट्ट मट्ट मट्टापय मट्टापय सर्वकर्माणि छिन्द छिन्द भक्ष[१९] भक्ष मेदमांसरुधिरमत्स्यमेदमज्जाप्रिय एह्येहि

---

१. ASB °वं नाम महा° । २. CU °सुर° । ३. CU & BOI omit °चलित° । ४. CU °ती । ५. ASB repeats ६. ASB & BOI पिशाचा° । ७. ASB & BOI omit ८. ASB °सर्पं । ९. CU adds वज्राय फट् १०. ASB °स्व° । ११. ASB °शर° । १२. ASB निश्चारित° । १३. BOI and CU read instead समाधिविधिभेदेन । १४. BOI and CU omit. १५. CU omits °वज्र° । १६. BOI and CU लघु लघु । १७. ASB has ताट ताट चल् चल दह दह instead of वह वह only १८. ASB घाटय । १९. BOI and CU भक्षय ।

भगवन् सर्वविघ्नानि[1] सर्वमन्त्राणि सर्वमूलकर्माणि सर्वमूलग्रहान् हन हन[2] भञ्ज भञ्ज मर्द मर्द इदं मे कार्यं साधय हूँ नीलाय नीलवज्र[3]दण्डाय तुरु तुरु विघ्नविनायकनाशकाय[4] हुरु हुरु दीप्तचण्डाय सर्वशत्रूणां हृदयानि पीडय छिन्द छिन्द विद्यानां छेदक हूँ[5] विद्यानां शिष्टान् स्मर स्मर समयं वज्रधरवचनं कर्माणि निकृन्तय हूँ हूँ हन हनं[6] दह दह कुरु कुरुँ[7] तुरु तुरु हुरु हुरुँ[8] फट् फट् हूँ हूँ हूँ भक्षापय कृतान्ताय देवऋषि-विद्रापकाय हन हनं[9] वज्रदण्डाय[10] स्वाहा ॥

अथास्मिन् भाषितमात्रे सर्वदुष्टाग्रसम्भवाः ।
भीताः सन्त्रस्तमनसो वज्रसत्त्वमनुस्मरन् ॥१८॥

जपेनाष्टशतेनायं क्रोधराजो महायशः ।
घातकः सर्वदुष्टानां विधिचक्र[11]प्रयोजनैः ॥१९॥

इत्याह च ।

अथ भगवान् अक्षोभ्यवज्रस्तथागतः समन्तमेघश्रियं नाम समाधिं समापद्येमं महाबलवज्रं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ।

॥ नमः समन्तकायवाक्चित्तवज्राणाम् । ओं हूँ हूँ हूँ फट् फट् फट् ओं ऊग्र-शूलपाणि हूँ हूँ हूँ फट् फट् फट् ओं ज्योतिर्निर्णाद हूँ हूँ हूँ[12] ओं फट् फट् फट्[13] ओं[14] महाबलाय स्वाहा ।

अथास्मिन् भाषितमात्रे सर्वे नागा महाबलाः ।
भीताः सन्त्रस्तमनसः त्रिकायवज्रमनुस्मरन् ॥२०॥

जापमात्रप्रयोगेण सर्वकर्माणि साधयेत् ।
अनावृष्टिसमये च पातयेद्वारिमण्डलम् ॥२१॥

अथ भगवान् समन्तनिर्घातवज्रं नाम समाधिं समापद्येमं सर्वतथागतटक्किराज-महाक्रोधं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ।

---

१. BOI and CU omit सर्वं विघ्नानि । २. CU भर, BOI हर । ३. CU omits °वज्र° । ४. ASB °विनायकं नाशकाय । ५. ASB adds महाक्रोधकं हूँ । ६. CU हर हर । ७. ASB हुरु हुरु । ८. ASB and CU omit ९. CU हर हर । १०. CU °ण्डिरो । ११. ASB °वज्र° । १२. Twice in CU. १३. CU omits. Twice in ASB. १४. Thrice in ASB. ASB and CU add फट् फट् फट् ।

॥ नमः समन्तकायवाक्चित्तवज्राणाम् । ओं टक्कि हूँ जः ॥

अथास्मिन् भाषितमात्रे सर्वबुद्धा महात्मजाः ।
भीताः समयमापेदे त्रिवज्रकायमनुस्मरन् ॥२२॥

लिङ्गं दक्षिणपादेन[1] वज्रसत्त्व[2]प्रयोगतः ।
त्रिवज्रमन्त्रचक्रेण सर्वसत्त्वा[3]कर्षणं भवेत् ॥२३॥

अथ भगवान् ज्ञानमालाम्बुवज्रं नाम समाधिं समापद्येममचलवज्रचण्डसमयं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ।

॥ नमः समन्तकायवाक्चित्तवज्राणाम् । ओं अचलकारण हूँ हूँ[4] मोट्ट मोट्ट[5] सट्ट सट्ट ह ह मोह मोह सह सह[6] हन हन[7] दह दह तट्ट तट्ट तिष्ठ तिष्ठ आविश आविश महामत्तपालक[8] धुन धुन तिणि तिणि किणि किणि खाद खाद[9] विघ्नान् मारय मारय दुष्टान् भक्ष भक्ष सर्वान्[10] कुरु कुरु किरि किरि महाविषमवज्र स्फोटय स्फोटय हूँ हूँ हूँ नृबलितरंग[11] नर्तक आँ आँ[12] हाँ हाँ[13] अचलचेत[14] स्फोटय स्फोटय ओं[15] असमन्तिक त्राट् महाबल सातय समयं[16] मँ त्राँ[17] हाँ माँ शुध्यतु वज्री[18] तुष्यतु वज्री नमोऽस्त्वप्रतिबलेभ्यः ज्वालय त्राट् असह नमः स्वाहा ॥

अथास्मिन् भाषितमात्रे सर्वे देवाः सकिङ्कराः ।
मूर्च्छितास्त्रस्तमनसो मन्त्र[19]कायमनुस्मरन् ॥२४॥

अनेन क्रोधमन्त्रेण महादेवादयः सुराः ।
भीताः सम्पुटकायेन आकृष्यन्ति महर्धिकाः ॥२५॥

अथ भगवान् समयविजृम्भि[20]तवज्रं नाम समाधिं समापद्येमं सर्ववज्रधरसमयं सुम्भ[21] महाक्रोधं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ।

---

१. CU adds क्रान्त्वा । २. BOI and CU वज्रयोग° । ३. ASB °मन्त्रा° । ४. Thrice in BOI. ५. ASB omits ६. ASB सद; CU adds हस हस । ७. CU हरं हर । ८. ASB °मन्त्रबालक, CU मट्टपालक । ९. CU omits. १०. CU °त्वान्° । ११. ASB °गा° । १२. CU आ । १३. Thrice in BOI. १४. CU adds खाद खाद । . १५. ASB हूँ । १६. ASB omits १७. ASB परमन्त्राणि समयमन्त्रान् ओं श्रो instead of मँ त्राँ । १८. ASB लोकं । १९. ASB वज्र° । २०. CU °स्क° । २१. BOI °सम्भव° ।

॥ ओं नमः समन्तकायवाक्‌चित्तवज्राणाम् । ओं सुम्भ निसुम्भ[1] हूँ गृण्ह गृण्ह हूँ गृण्हापय गृण्हापय हूँ आनय हो भगवन् विद्याराज हूँ फट् ॥

अथास्मिन् भाषितमात्रे [2]सर्वकन्या महर्धिकाः ।
मुक्तकेशा विवस्त्राङ्गा[3] वज्रसत्त्वमनुस्मरन् ॥२६॥

वज्रसत्त्वपदाक्रान्तं सर्वताथागताधिपम् ।
वज्राङ्कुशपाशेन वज्रकन्याकर्षणं परम् ॥२७॥

अथ भगवान् महासमयतत्त्वोत्पत्तिवज्रं नाम समाधिं समापद्येदं महासमयवज्रगुह्यवाक्समयतत्त्वपदं स्वकायवाक्‌चित्तवज्रेभ्यो निश्चारयामास ।

बुद्धवज्र[4]त्रिकायेषु वज्रसत्त्वविभावना ।
पाशवज्राङ्कुशधरैर्बुद्धाकर्षणमुत्तमम् ॥२८॥

बुद्धवाक्कायायोगेन महाचक्रप्रयोगतः ।
वज्रसत्त्वो महाराजो ध्रुवमाकृष्यते सदा ॥२९॥

चक्रपद्ममहावज्रैः त्रिवज्रामेघभावनैः ।
वज्राङ्कुशप्रभेदेन सर्वमन्त्राकर्षणं ध्रुवम्[5] ॥३०॥

स्वमन्त्रपुरुषं ध्यात्वा सर्ववज्र[6]मयं शिवम् ।
कन्यां तु मानुषीं श्रेष्ठां हृद्वज्राङ्कुश योगतः ॥३१॥

वातमण्डलसंयोगे[7] ध्रुवमाकृष्यते सदा ।
वैरोचनमहाबिम्बं भावयेच्चन्द्रमण्डलम् ॥३२॥

शचीं तत्र स्थितां चिन्तेद्वज्रामृतप्रयोगतः ।
पञ्चाशवारानुच्चार्य ध्रुवमाकृष्यते सदा ॥३३॥

वज्राङ्कुशमहाबिम्बं तीक्ष्णज्वालासमप्रभम् ।
वज्रमण्डलकं ध्यात्वा स्वकन्याकर्षणमुत्तमम् ॥३४॥

स्वक्रोधवज्रसमयं वज्रपाताल[8]वासिनम् ।
शूलवज्राङ्कुशपाशै[9]र्दैत्यकन्याकर्षणमुत्तमम्[10] ॥३५॥

---

१. CU °म्भे । २ CU omits ३. ASB and CU °त्मा । ४. ASB °र्जू । ५. ASB परं । ६. BOI सत्त्व° । ७. ASB °लियोगेन । ८. ASB and CU °वीतल । ९. ASB °पदै° । १०. ASB परं ।

गौरिकां खटिकां[1] वापि वज्राङ्कुशप्रयोगतः ।
चन्द्रोपरागसमये मुखे प्रक्षिप्य साधयेत् ॥३६॥
ब्रह्मेन्द्ररुद्रदेवानां यस्य नाम[2] समालिखेत्[3] ।
आगच्छन्ति भयत्रस्ताः वाक्यवज्रवचो यथा ॥३७॥
सर्वाकारवरोपेतं मञ्जुवज्रं विभावयेत् ।
यमान्तकं महाक्रोधं वज्राङ्कुशं विचिन्तयेत् ॥३८॥
कल्पोद्दाहमहाचक्रं ध्यात्वा यक्षींस्तु साधयेत्[4] ।

इत्याह च ॥

मुद्राभेदेन सर्वेषां मन्त्रभेदेन सर्वथा ।
आकर्षणपदं प्रोक्तं न चेन्नाशमवाप्नुयात् ॥३९॥
वज्रसत्त्वो महाराजश्चोदनीयो मुहुर्मुहुः ।
स एव सर्वमन्त्राणां राजा परमशाश्वतः ॥४०॥

अथ भगवान् समन्तविजृम्भितज्ञानवज्रं[5] नाम समाधिं समापद्येमां वज्रैकजटां नाम महासर्पापराजितं[6] वाग्वज्राग्रीं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास । ओं[7] शूलिनि[8] स्वाहा ॥

अथास्यां भाषितमात्रायां नागकन्या महर्धिकाः ।
दह्यमाना विवस्त्राङ्गा[9] बुद्धबोधिमनुस्मरन् ॥४१॥
अनया मन्त्रविद्यया सर्वे आकृष्यन्ति पन्नगाः ।
नागकन्यां विशालाक्षीं समाकृष्योपभुंजयेत्[10] ॥४२॥

अथ भगवान् गगन[11]समयसम्भवज्रं[12] नाम समाधिं समापद्येमां महाधर्मसमयवज्रभृकुटीं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ।

ओं[7] भयनाशनि त्रासनि[13] त्रासय[14] भृकुटी तटि वेतटि वेतटि[15] वैरटि वैरटि श्वेते[16] श्वेतजटिनि स्वाहा ॥

---

१. ASB omits. CU खतिकां । २. ASB नामं यस्य । ३. ASB लिखेत् स्वयम् । ४. ASB भुञ्जयेत् । ५. CU °स्क° । ६. BOI and CU °समयराज° । ७. ASB adds हूं । ८. BOI and CU विनिःसृत्व° । ९. ASB °त्मा° १०. BOI °व्रते । ११. CU नगर° । १२. ASB omits °वज्र° । १३. ASB adds त्रासे । १४. Twice in ASB १५. ASB omits १६. BOI omits

अथास्यां गीतमात्रायां सर्वविद्याधरात्मजाः ।
कम्पिता भयमापेदे ज्ञानराजमनुस्मरन् ॥४३॥
विद्याधरमहाकन्यां चलत्कनककुण्डलाम् ।
आकृष्य समयाद्येन अनया मन्त्रविद्यया ॥४४॥
निरोधवज्रराजेन[1] निष्पन्नेनाग्रचारुणा[2] ।
त्रिवज्रज्ञानसम्भूताः क्षणात् कृष्यन्ति सर्वतः ॥४५॥
अथवा[3] सर्वक्रोधानां लक्षजापेन मन्त्रिणः ।
सर्वकर्मकराः प्रोक्ताः विजनेषु महत्सु च ॥४६॥
आचार्यनिन्दनपरा महायानाग्रनिन्दकाः ।
मारणीयाः प्रयत्नेन अथवा स्थानचालनम्[4] ॥४७॥
अनेन बोधिं परमां मन्त्रसिद्धिञ्च प्राप्नुयात् ।

इत्याह च ॥

दशदिक्सर्वबुद्धानां कायवाक्चित्तघातनम् ॥४८॥
भावनीयं विधानेन[5] रिपूणां दुष्टचेतसाम् ।
रुधिरार्द्रं सलिलार्द्रं विण्मूत्रार्द्रं वापि कारयेत् ॥४९॥
प्रावृत्य[6] लिङ्गं चाक्रम्य क्रोधराजं प्रयोजयेत् ।
शताष्टेन तु[7] पूर्णेन ध्रुवं बुद्धोऽपि शीर्य्यते ॥५०॥

इत्याह च ।

सलिलार्द्रगतं वस्त्रं कृत्वा क्रोधाग्रबन्धनात् ।
लिङ्गं[8] पादेन चाक्रम्य ध्रुवं बुद्धोऽपि नश्यति ॥५१॥
विण्मूत्रार्द्रगतं वस्त्रं पूतिगन्धजुगुप्सितम् ।
प्रावृत्य मन्त्रमावर्तेत्[9] शुष्यते म्रियते क्षणात् ॥५२॥
भस्मोदकार्द्रगतं वस्त्रं प्रावृत्य क्रोधसङ्कुलम् ।
शताष्टवारानुच्चार्य वज्रसत्त्वोऽपि शीर्य्यते ॥५३॥

---

१. ASB °जापेन । २. ASB °रुणा° । ३. अथ भगवान् । ४. BOI °चारिणम् । ५. CU विचारेण । ६. ASB परा° । ७. ASB °ष्टुपरि° ८. ASB वाम । ९. BOI मावर्त्ते ।

इत्याह च ।

सलिलार्द्रगतं वस्त्रं प्रावृत्य क्रुद्ध[1]चेतसा[2] ।
नग्नो मुक्तशिखो भूत्वा विकटोत्कटसम्भ्रमः ॥५४॥
लिङ्गं पादेन चाक्रम्य खधातुमपि नाशयेत् ।

इत्याह च ।

मातृगृहे श्मशाने[3] शून्यवेश्मनि चतुष्पथे ॥५५॥
एकलिङ्गैकवृक्षे वा अभिचारं समारभेत् ।
मानुषास्थिमयं कीलं अष्टाङ्गुलप्रमाणतः ॥५६॥
शताष्टवारानुच्चार्य[4] अरिद्वारेषु गोपयेत् ।
बुद्धस्त्रिकायवरदो ज्ञानाज्ञानविवर्जितः ॥५७॥
पक्षाभ्यन्तरपूर्णेन भ्रश्यते[5] म्रियतेऽपि वा ।
कपालं परिपूर्णवा प्राप्य विज्ञो[6] विशेषतः ॥५८॥
लिखेन्मन्त्रपदं तत्र जापया[7] वज्रभाषया ।
अरिद्वारेऽथवा ग्रामे गोप्योच्चाटयते[8] ध्रुवम् ॥५९॥
तालपत्रेऽथवाऽन्यत्र क्रोधमन्त्रं समालिखेत् ।
अरिगृहे[9]ऽथवा द्वारे गोप्य नश्यति[10] शुष्यति ॥६०॥

इत्याह भगवान् महासमयकेतु[11]वज्रः ।

अथ भगवान् सर्वतथागतकायवाक्चित्तनिबन्धनवज्रं नाम समाधिं समापद्येदं सर्वत्रैधातुककायवाक्चित्तकीलनवज्रं[12] स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ।

॥ओँ घ घ घातय[13] घातय सर्वदुष्टान् फट् कीलय कीलय सर्वपापान् फट् हूँ हूँ हूँ वज्र कीलय वज्रधर आज्ञापयति कायवाक्चित्तवज्रं कीलय हूँ फट् ॥

अथास्मिन् भाषितमात्रे सर्वे वज्रा महर्धिकाः ।
मूर्च्छिता भयमापन्नाः स्ववज्रचित्तमनुस्मरन् ॥६१॥

---

१. CU क्रूर° । २. ASB and CU °सः । ३. ASB adds वा । ४ °नभिमन्त्र्य । ५. CU भ्रत्स्यते । ६. BOI and CU विधिज्ञो । ७. ASB जपन्वा । ८. ASB °टनं, CU °टयेत् । ९. CU °द्वारे । १०. BOI तस्य वि° ; CU °ते तस्य वि° । ११. CU हे° । १२. ASB मन्त्रन्नाम । १३. Once in BOI.

मानुषास्थिमयं कीलं अथवा खदिराग्रजम्[1] ।
अयोमयकृतं कीलं त्रिवज्रकायनाशनम् ॥६२॥
वज्रसत्त्वं समाधाय स्फुलिङ्गाकुलसुप्रभम् ।
त्रिवज्रकायपर्यन्तं बिम्बं ध्यात्वा प्रयोजयेत् ॥६३॥
वैरोचनमहामुद्रामथवा रागवज्रिणः ।
यमान्तक[2]महामुद्रां ध्यात्वा त्रिवज्रकीलनम्[3] ॥६४॥
कुण्डलामृतवज्रेण[4] दुष्टक्रूरनिकृन्तनम् ।
कर्तव्यं वज्रयोगेन बुद्धस्यापि महात्मनः ॥६५॥
हृदयं यावत् पादान्तं वज्रकीलविभावनम् ।
ऊर्ध्वन्तदेवसमयमि[5]दं कीलविजृम्भितम् ॥६६॥
ध्यानवज्रप्रयोगेण ध्रुवं बुद्धोऽपि कील्यते ।
वज्रसत्त्वो महाराजा कीलयन् म्रियते लघु ॥६७॥

अथ भगवान् महावैरोचनः कायविजृम्भितवज्रं नाम समाधिं समापद्येदं स्वकायसमयाक्षेपवज्रकीलनमन्त्रं[6] स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ।

॥ ओं छिन्द छिन्द भिन्द भिन्द[7] हन हन दह दह दीप्तवज्रचक्र क्षुं[8] फट् ॥

अन्योन्यवेष्टनाकारमङ्गुष्ठपदमीलनम् ।
वैरोचनपदाक्रान्तं वज्रकीलनिपातनम् ॥६८॥
हतमात्रे महासत्त्वे त्रिकायवज्रसम्भवः ।
उत्तिष्ठेत् समर्या[9]ग्रेण न चेन्नाशपदं भजेत्[10] ॥६९॥

अथ भगवान् लोकेश्वरो वाग्विजृम्भितं[11] नाम समाधिं समापद्येदं वाक्समयाक्षेपकीलनमन्त्रं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ।

॥ ओं ह्रीः भूर्भुवः ॥

विकसितज्ञानं[12] पद्मे वज्राङ्गु[13]लिनिवेशनम् ।
वाक्यं[14] वज्रपदाक्रान्तं वज्रकीलनिपातनम् ॥७०॥

---

१. CU रागवज्रिणः । CU omits a long portion of 4 lines from here. २. CU महान्तक° । ३. CU °क° । ४. CU कीलेन । ५. ASB °येन इ° । ६. BOI and CU omit °मन्त्रं । ७. ASB and CU omit ८. ASB हूं । ९. ASB यो° । १०. CU °वेत्° । ११. ASB °तवज्° । १२. ASB omits ज्ञान° । १३. CU °ज्ञ° । १४. ASB, BOI and CU राग° ।

हतमात्रे महावज्रे त्रिकायालयसम्भवः ।
उत्तिष्ठेत् हतमात्रेण न चेन्नाशपदं भजेत् ॥७१॥

अथ भगवान् महावज्रधरः चित्तविजृम्भितवज्रं नाम समाधिं समापद्येदं चित्तसमयाक्षेपकीलनमन्त्रं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ।[1]

॥ ओं वज्रराज हूँ ॥

पञ्चशूलनिवेशेन[2] स्फुलिङ्गाकुलसाधनम्[3] ।
चित्तवज्रपदाक्रान्तं वज्रकीलनिपातनम् ॥७२॥

हतमात्रे महावज्रे त्रिवज्रालय[4]सम्भवः ।
उत्तिष्ठेत् हतमात्रेण न चेन्नाशपदं भजेत् ॥७३॥

सम्यग्विधान[5]मार्गेण कायवाक्चित्तयोगतः ।
खधातुवज्रपर्यन्तं कीलयेन्नात्र संशयः ॥७४॥

इत्याह भगवान् महाकीलवज्रः ।

अथ बुद्धास्त्रिकायाग्राः सत्त्वधातुहितैषिणः ।
तुष्टाः प्रामोद्यसंप्राप्ताः इदं घोषमकारयन् ॥७५॥

अहो गुह्यपदं श्रेष्ठम[6]हो सारसमुच्चयम् ।
अहो धर्मपदं शान्तमहो वज्रविदारणम् ॥७६॥

कीलनं सर्वबुद्धानां बोधिसत्त्वा महायशाः ।
कायवाक्चित्तवज्राणां कीलनं समुदाहृतम् ॥७७॥

इदं तत् सर्वमन्त्राणां कीलनं तत्त्व[7]सम्भवम् ।
कायवाक्चित्तवरदं मन्त्रतत्त्वसमुच्चयम् ॥ इति ॥७८॥

इति श्री सर्वतथागतकायवाक्चित्तरहस्यातिरहस्ये गुह्यसमाजे महागुह्यतन्त्रराजे कायवाक्चित्ताद्भुतमन्त्राकर्षणविजृम्भितराजो नाम समाधिपटलश्चतुर्दशोऽध्यायः ॥

---

१. CU परिकी° । २. ASB and CU निबन्धेन । ३. ASB and CU भावनं । ४. ASB °मल° । ५. BOI and CU °चार° । ६. BOI महा° । ७. CU सत्त्व° ।

## पञ्चदशः पटलः

अथ वज्रधरो राजा सर्वाकाश[1]महाक्षरः ।
सर्वाभिषेकसर्वज्ञो वाग्वज्रं समुदीरयत्[2] ॥१॥
द्वादशाब्दिकां कन्यां तां[3] चाण्डालस्य महात्मनः ।
साधयेत् साधको नित्यं विजनेषु विशेषतः ॥२॥
विण्मूत्रसमयाद्येन चतुरस्रं विधानतः ।
मण्डलं कारयेत् तत्र वज्रमण्डलसाधनैः[4] ॥३॥
सर्वलक्षणसंशुद्धां चारुवक्त्रां सुशोभनाम् ।
सर्वालङ्कारसम्पूर्णामङ्के स्थाप्य विभावयेत् ॥४॥
पञ्चमण्डलचक्रेण बुद्धबिम्बविभावनम्[5] ।
भावयेत्पूजापदं रम्यं रहस्यं मन्त्रवज्रिणाम्[6] ॥५॥
वैरोचनमहाबिम्बं कायवाक्चित्तवज्रिणम् ।
ध्यानमन्त्रप्रयोगेण भवेद्बुद्धसमप्रभः ॥६॥
नीलोत्पलदलाकारां रजकस्य महात्मनः ।
कन्यां तु साधयेन्नित्यं वज्रसत्त्वप्रयोगतः ॥७॥
तदेव विधिसंयोगं कृत्वा कर्म समारभेत् ।
एषो हि सर्वमन्त्राणां समयो दुरतिक्रमः ॥८॥
स भवेत्तत्क्षणादेव वज्रसत्त्वसमप्रभः ।
सर्वधर्मधरो[7] राजा काममोक्षप्रसाधकः ॥९॥
चारुवक्त्रां विशालाक्षीं नटकन्यां सुशोभनाम् ।
साधयेत् साधको नित्यं वज्रधर्मविभावनैः ॥१०॥
स भवेद्वज्रधर्मात्मा दशभूमिप्रतिष्ठितः ।
वाक्समयधरो राजा सर्वाग्रः परमेश्वरः ॥११॥
ब्रह्मक्षत्रियवैश्यानां कन्यां शूद्रकुलोद्भवाम् ।
साधयेद्वज्रधर्मात्मा इदं गुह्यसमावहम् ॥१२॥

---

१. ASB °शो। २. ASB °रयन्। ३. ASB omits. ४. ASB वज्रकुलविभावनैः। ५. CU °ना। ६. °चक्रि°। ७. BOI & CU °समो।

अस्तमिते तु वज्रार्के साधनं तु समारभेत् ।
अरुणोद्गमवेलायां सिध्यते भावनोत्तमैः ॥१३॥

सर्वालङ्कारसम्पूर्णां गन्धपुष्पविभूषिताम् ।
ध्यात्वा तु वज्रसत्त्वाग्र्यां[1] लघुसिद्धिमवाप्नुयात् ॥१४॥

स भवेत्त्रिकायवरदो बुद्धलक्षणलक्षितः ।
योजनशतविस्तारमवभासं करोत्यसौ ॥१५॥

[2]द्वयेन्द्रिप्रयोगेण सर्वयोगान् समारभेत् ।
एषो हि सर्वसिद्धीनां[3] समयो दुरतिक्रमः ॥१६॥

विण्मूत्रसमयं भक्षेत् यदीच्छेत् सिद्धिवज्रिणः ।
एषो हि सर्वसिद्धीनां समयो दुरतिक्रमः ॥१७॥

विण्मूत्रसमयाद्येन द्वयेन्द्रियप्रयोगतः ।
सिध्यतेऽनुत्तरं तत्त्वं बुद्धबोधिपदं शिवम् ॥१८॥

इत्याह भगवान् काममोक्षसमयवज्रः ।

अथ भगवान् महासमयवज्रक्रोधं नाम समाधिं समापद्येदं सर्वतथागतवज्रसन्त्रासनक्रोधं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ॥

ओँ ह्रीः ष्ट्रीः विकृतानन सर्वशत्रून्नाशय स्तम्भय हूँ[4] हूँ फट् फट् स्वाहा ॥

विषरुधिरसंयुक्तं लवणं राजिकान्तथा ।
कण्टकाग्नौ जुहेत् क्रुद्धः कन्यानामपदैः सह ॥१९॥

मध्याह्नेऽर्धरात्रे वा इदं शस्यति सर्वथा ।
त्रिकोणे तु जुहेत् प्राज्ञोऽष्ट[5]सहस्रं विधानतः ॥२०॥

दिनत्रयमिदं कार्यं कन्यानां फलहेतुतः[6] ।
स्तम्भनं भवते तेन त्रिकल्पासंख्यमपि सदा ॥२१॥

बुद्धो धर्म[7]धरो वापि वज्रसत्त्वोऽपि वा यदि ।
अतिक्रमेद्यदि मोहात्मा तदन्तं तस्य जीवितम् ॥२२॥

---

१. ASB °ग्री, CU ग्र्यो । २. ASB द्वे° । ३. ASB °द्धा° । ४. Thrice in BOI. ५. ASB °थ । ६. ASB °ना । ७. ASB रज° ।

चतुर्दश्यां तथाष्टम्यां गृह्याङ्गारं श्मशानतः ।
अभिमन्त्र्य विधानेन दासकः स भवेत् सदा ॥२३॥

रेखां ददाति ध्यात्वा तु मन्त्रज्ञो यस्य कस्यचित् ।
शत्रोः प्रतिकृतिं कृत्वा म्रियते नात्र संशयः ॥२४॥

मुद्‌गरं ध्यानयोगेन पातयन् पतितं[1] भुवम् ।
हूँकारं ज्वालसंयुक्तं दीप्तवज्रं प्रभावयेत् ॥२५॥

नाशकः सर्वदुष्टानां वज्रपाणिकुलः स्मृतः ।
खटिकाङ्गारादिभिर्लेख्य पुरुषं वाऽथवा स्त्रियम् ॥२६॥

कुठारं पाणौ विभावित्वा ग्रीवां छिन्नां विभावयेत् ।
बुद्धास्त्रिवज्ररत्नाग्राः सर्वसत्त्वहितैषिणः ॥२७॥

अनेन हन्यते वापि म्रियते नात्र संशयः ।
कर्मवज्रमहादीप्तं स्फुलिङ्गगहनाकुलम् ॥२८॥

मध्ये वज्रं विभावित्वा वारिस्तम्भनमुत्तमम् ।
मण्डले लिख्यमाने[2] तु वाताद्यं यदि जायते ॥२९॥

दंष्ट्रामुद्रां ततो बद्‌ध्वा दुष्टसत्त्वं[3]मनुस्मरेत् ।
बुद्धैश्च बोधिसत्त्वैश्च निर्मितं वापि यद्भवेत् ॥३०॥

शीर्यते दृष्टमात्रेण न चेन्नाशं समाप्नुयात् ।
बुद्धाश्च बोधिसत्त्वाश्च ये चान्ये दुष्टजन्तवः ।
त्रासितास्तेन मन्त्रेण म्रियन्ते नात्र संशयः ॥३१॥

तत्रेदं सर्वतथागतमन्त्ररहस्यहृदयम्[4] ।
ज्ञानसत्त्वप्रयोगेण मध्ये बिम्बं प्रभावयेत् ।
चतुःस्थानेषु मन्त्रज्ञो योषितं स्थापयेत्सदा ॥३२॥

सर्वालङ्कारसम्पूर्णां[5] सर्वलक्षणलक्षिताम् ।
पद्मं प्रसारितं कृत्वा इदं मन्त्रं विभावयेत् ॥३३॥

---

१. ASB omits. २. ASB °ले । ३. CU शत्रु° । ४. ASB adds फट । ५. BOI संयुक्तां ।

॥ हूँ ॥

पञ्चरश्मिप्रभं दीप्तं भावयेत् योगवाज्रिणम्[१] ।
कायवाक्चित्तवज्रेषु पातयन् बोधिमाप्नुयात् ॥३४॥
स भवेत्तत्क्षणादेव वैरोचनसमप्रभः[२] ।
वज्रसत्त्वो महाराजः संबुद्ध[३]कायवज्रधृक् ॥३५॥
सर्वस[४]त्त्वोत्पादनकरो[५] नाम समाधिः ।
योषितं प्राप्य विधिना चारुवक्त्रां हितैषिणीम् ।
प्रच्छन्ने प्रारभेत् पूजा गुह्या[६]गुह्यं विभक्षयेत् ॥३६॥
स भवेत्तत्क्षणादेव मञ्जुश्रीतुल्यतेजसः[७] ।
अन्तर्द्धानाधिपः श्रीमान् जाम्बूनदसमप्रभः ॥३७॥
भक्ष्यं वा अथवा विष्ठं मांसं वापि प्रवेशयेत् ।
[८]अभिमन्त्र्य विधानेन भक्ष्यं बुद्धैर्न दृश्यते ॥३८॥

इत्याह च ।

विष्ठं संगृह्य विधिना[९] शरावसम्पुटे न्यसेत् ।
शताष्टवारान् सञ्चोद्य बुद्धसूर्यैर्न दृश्यते ॥३९॥
श्वानमांसं हयमांसं महामांसं विधानतः ।
गृह्य सम्पुटयोगेन भक्षयंस्तैर्न दृश्यते ॥४०॥
विष्ठेन[१०] सह संयुक्तां गुलिकां त्रिलोहवेष्टिताम् ।
द्वयेन्द्रियप्रयोगेण सर्वबुद्धैर्न दृश्यते ॥४१॥
मह[११]मांसेन संयुक्तां गुलिकां त्रिलोहवेष्टिताम् ।
द्वयेन्द्रियप्रयोगेण सर्वबुद्धैर्न दृश्यते ॥४२॥
श्वानमांसेन संयुक्तां गुलिकां त्रिलोहवेष्टिताम् ।
द्वयेन्द्रियप्रयोगेण सर्वबुद्धैर्न दृश्यते ॥४३॥
गोमांसेन च संयुक्तां गुलिकां त्रिलोहवेष्टिताम् ।
द्वयेन्द्रिप्रयोगेण सर्वबुद्धैर्न दृश्यते ॥४४॥

१. ASB वज्रयोगिनः । २. ASB मञ्जुश्रीतुल्यतेजसा । ३. बुद्धत्रि° । ४. ASB वज्र° । ५. ASB & CU °वज्रो । ६. CU °ह्यं । ७. CU °सा । ८. ASB omits six lines from here. ९. CU विष्ठां गृहे विधानेन । १०. BOI विश्वेन । ११. BOI omits four lines from here.

प्राणकैर्विष्ठसंभूतैर्गुलिकां कारयेद्व्रती ।
द्वयेन्द्रियप्रयोगेण सर्वबुद्धैर्न दृश्यते ॥४५॥
कर्पूरचन्दनैर्युक्तां गुलिकां त्रिलोहवेष्टिताम् ।
द्वयेन्द्रियप्रयोगेण सर्वबुद्धैर्न दृश्यते ॥४६॥
रोचनागुरुसंयुक्तां गुलिकां त्रिलोहवेष्टिताम् ।
द्वयेन्द्रियप्रयोगेण भवेद्वज्रमहाबलः[१] ॥४७॥
कर्पूरकुङ्कुमैर्युक्तां गुलिकां त्रिलोहवेष्टिताम् ।
द्वयेन्द्रियप्रयोगेण सर्वबुद्धैर्न दृश्यते ॥४८॥

इत्याह च ।

अधिष्ठाय महामुद्रां यस्य कस्यापि[२] वज्रिणः ।
स भवेत् तादृशः श्रीमान् महाबलपराक्रमः ॥४९॥
योजनकोटि[३]सम्पूर्णमूर्द्ध्वं वज्रगतिर्भवेत् ।
त्रिसाहस्रगतिः श्रीमान् भवेद्बुद्धसमप्रभः ॥५०॥
कामधातुस्थितां कन्यां सुरभोगां कुलव्रताम्[४] ।
रूपधातुस्थिताश्चापि कामयेत्[५] महाबलः ॥५१॥

इत्याह भगवान् समयान्तर्द्धानमहावज्रः ।

अथ बुद्धाः प्रहृष्टात्माऽभ्रान्तचित्ता मनीषिणः ।
विस्मयोत्फुल्लनयना इदं घोषमुदीरयन् ॥५२॥
अहो सुविस्मयमिदमहो[६] गुह्यमहाक्षरम् ।
अहो स्वभावसंशुद्धमहो धर्मं सुनिर्मलम् ॥इति॥५३॥
अथ वज्रधरः शास्ता स्रष्टा कर्त्ता महाक्षरः ।
शुद्धवज्रो महाधर्मो वज्रघोषमकारयत् ॥५४॥
सर्व[७]वज्रप्रयोगेण तोषणं बुद्धवज्रिणाम् ।
बुद्धबोधि प्रभेदेन तोषणं वज्रचारिणाम् ॥५५॥

---

१. CU सर्वबुद्धैर्नं दृश्यते । २. ASB कस्यचित् । ३. BOI °शत° । ४. ASB °पुत्राम् । ५. ASB °यति । ६. ASB omits three lines from here. ७. ASB सत्व° ।

वज्रलोचन[1]बिम्बाद्यैः उष्णीषाराधनं स्मृतम् ।
क्रोधानामपि तच्छ्रेष्ठं बुद्धवज्रप्रभावनम् ॥५६॥
विद्याराजाग्रधर्माणां रत्नकेतुविभावनम् ।
विद्याराज्ञीप्रयोगेषु अमितायुर्विभावनम् ॥५७॥
सर्वकर्मिकमन्त्राणां अमोघज्ञानभावनम् ।
सर्वेषामेव मन्त्राणां वज्रसत्त्वविभावनम् ॥५८॥

इत्याह च ।

यक्षिणीमन्त्रतन्त्राणां यमान्तकस्य कल्पनम् ।
सर्वेषां योगमन्त्राणां सस्तम्भं वि[2]प्रचोदनम् ॥५९॥

इत्याह च भगवान् महासमयवज्रः[3] ।

अनेन ध्यानवज्रेण मन्त्राराधनमण्डलम् ।
साधकानां हितं प्रोक्तं महासमयसाधनम् ॥६०॥
अथ वज्रधरः शास्ता सर्वधर्मेश्वरः प्रभुः ।
कायवाक्चित्तसंशुद्धो ज्ञानवज्रमुदीरयत् ॥६१॥
पर्वताग्रेषु रम्येषु विजनेषु वनेषु च ।
ध्यानवज्रं प्रकुर्वीत जपमन्त्रप्रयोगतः ॥६२॥
वज्रसत्त्वादयः सर्वे मन्त्रध्यानप्रचोदिताः ।
कुर्वन्ति चित्रकर्माणि वाक्यवज्र[4]वचो यथा ॥६३॥
वज्रधर्ममहाबिम्बं पद्मरागसमप्रभम् ।
कायवाक्चित्तमहावज्रं[5] [6]तत्स्थाने कुलकल्पनम् ॥६४॥
आवेशनविधिं सर्वं कारयन् सिद्ध्यति ध्रुवम् ।
स्तो[7]भस्तम्भं महाबिम्बर्मा[8]र्यभौमं चतुर्थकम् ॥६५॥
कर्तव्यं सिद्धिवज्रेण एवं सिद्ध्यति शाश्वतम् ।
द्वादशवार्षि[9]कीं कन्यां पुरुषं द्वादशाब्दिकम् ॥६६॥
सर्वलक्षणसम्पूर्णं गृह्यावेशं[10] प्रकल्पयेत् ॥
विधानानि तु सर्वाणि कृत्वा कर्मप्रसाधनम् ।
अन्यथा हास्यमाप्नोति त्रैधातुकेषु जन्तुषु ॥६७॥

---

१. BOI वज्रात्माचर° । २. ASB शस्तं मूर्ध्नि । ३. BOI & CU omit °वज्र ।
ASB वाक्कर्म° । ५. ASB °वज्रेषु । ६. ASB त्रि° । ७. ASB °स्तोत्रं ।
ASB & BOI °दिव्यं । ९. ASB & CU °शाब्दिकां । १०. BOI & CU °ह्याथ सं° ।

तत्रेमानि हृदयमन्त्राक्षरपदानि










खधातुमपि निश्चेष्टं सर्वकल्पविवर्जितम् ।
आवेशयति विधिना वज्रसत्त्वमपि स्वयम् ॥६८॥
हूँकारे वज्रसत्त्वात्मा हःकारे कायवज्रिणः ।
आःकारे धर्मधरो राजा इदं गुह्यपदं दृढम् ॥६९॥
ऐःकारं स्तोभनं प्रोक्तं भ्रमणं कम्पनं स्मृतम् ।
एषो हि सर्वस्तोभ[1]ानां रहस्योऽयं प्रगीयते ॥७०॥

इत्याह च ।

हस्तमात्रं द्विहस्तं वा यावद्धस्ताष्टपञ्चकम् ।
उत्तिष्ठन्ति भयत्रस्ता वज्रराजप्रचोदिताः ॥
तथैव सर्वं यथापूर्वमिदं गुह्यसमावहम् ॥ इति ॥७१॥
अथ वज्रधरो राजा सर्वतथागताधिपः ।
त्रिकायपदसंघोष[2]मिद्दं घोषमुदीरयत् ॥७२॥
अनेकाग्रगतेनापि इदं कार्यं दृढव्रतैः ।
कर्तव्यं वा[3]न्ययोगेन सर्वदुष्टविदारणम् ॥७३॥
शत्रोः प्रतिकृतिं कृत्वा चिताङ्गारतुषादिभिः ।
नग्नो मुक्तशिखो भूत्वा त्रैलोक्यमपि नाशयेत् ॥७४॥
शत्रोः प्रतिकृतिं कृत्वा श्म[4]शानचितिभस्मना ।
सहस्राष्टशतेनापि म्रियते नात्र संशयः ॥७५॥
गोमांसहयमांसेन श्वानमांसेन चित्रिणा ।
त्रिकोणमण्डले कार्यं ध्रुवं वज्रोऽपि नश्यति ॥७६॥
महामांसेन सर्वेषां नाशनं वज्रजं स्मृतम् ।
एषो हि सर्वक्रूराणां ना[5]शको दारुणः स्मृतः ॥७७॥

---

१. ASB °त्रा°। २. ASB° शुद्ध°। ३. ASB ना°। ४. ASB omits six lines form here. ५. CU त्रा°।

शत्रोः प्रतिकृतिं कृत्वा विण्मूत्रेणाग्रधर्मिणा ।
कण्टकाग्नौ जुहेत् क्रुद्धो ध्रुवं बुद्धोऽपि नश्यति ॥७८॥

इत्याह च ।

शत्रोः प्रतिकृतिं कृत्वा नदीस्रोतोगयोरपि ।
तिलमात्रमपि सर्वाङ्गं कण्टकैर्विषसम्भवैः ।
पूरयेच्चोदनपदैर्ध्रुवं[1] बुद्धोऽपि नश्यति ॥७९॥

इत्याह च ।

राजिकां लवणं तैलं विषं धत्तूरकं[2] तथा ।
मारणं सर्वबुद्धानां इदं श्रेष्ठतमं स्मृतम् ॥८०॥

अङ्गारार्द्रगतं वस्त्रं प्रावृत्य क्रोधचेतसा ।
लिङ्गं पादेन चाक्रम्य राक्षसैर्गृह्यते ध्रुवम् ॥८१॥

प्रतिकृतिमस्थिचूर्णेन विषेण रुधिरेण च ।
कृत्वा तु गृह्यते शीघ्रं वज्रसत्त्वोऽपि दारुणः ॥८२॥

लिङ्गराजिकसंयुक्तं विण्मूत्रेणापि पूरितम् ।
पादाक्रान्तगतं कृत्वा महामेघेन[3] गृह्यते ॥८३॥

इत्याह च ।

तत्रेदं सर्वतथागतवज्रमहाक्रोधसमयहृदयम् ।

॥ नमः समन्तकायवाक्चित्तवज्राणाम् । ओं हूलु हूलु तिष्ठ तिष्ठ बन्ध बन्ध हन हन दह दह गर्ज गर्ज विस्फोटय विस्फोटय सर्वविघ्नविनायकान्महागणपतिजीवितान्तकराय हूँ फट् ॥

होमं वाऽप्यथवा ध्यानं कायवाक्चित्तभेदनम्[4] ।
कर्तव्यं नान्यचित्तेन इदं मारणमुत्तमम् ॥८४॥

वज्रसत्त्वं महाक्रूरं विकटोत्कटभीषणम् ।
कुठारमुद्गरहस्तं ध्यात्वा ध्यानं प्रकल्पयेत ॥८५॥

---

१. ASB °रै°। २. ASB धुत्तूरकं। ३. °दाहेन। ४. ASB भिन्दनं।

॥ तत्रेदं महाक्रूरक्रोधसमयम् ॥

स्वधातुं परिपूर्णं तु सर्वबुद्धैः प्रभावयेत् ।
घातितं तेन दुष्टेन[1] ध्यात्वा म्रियेत तत्क्षणात् ॥८६॥

बुद्धैश्च बोधिसत्त्वैश्च परिपूर्णं विभावयेत् ।
घातितं सर्वदुष्टेन[2] म्रियते वज्रधरः स्वयम् ॥८७॥

चिन्तयेत्पुरतो मन्त्री रिपुं बुद्धापकारिणम् ।
भीतं भयाकुलं चिन्तेत् म्रियते नात्र संशयः ॥८८॥

राक्षसैर्विविधैः क्रूरैः प्रचण्डैः क्रोधदारुणैः ।
त्रासितं भावयेत्तेन[3] म्रियते वज्रधरः स्वयम् ॥८९॥

उलूकैः काकगृध्रैश्च शृगालैर्दीर्घतुण्डकैः ।
भक्षितं भावयंस्तेन[4] ध्रुवं बुद्धोऽपि नश्यति ।
कृष्णसर्पं महाक्रूरं भयस्यापि भयप्रदम् ॥९०॥

ध्यात्वा विषाग्रसमयं ललाटे तं[5] विशिष्यते ।
भक्षितं तेन सर्पेण ध्रुवं बुद्धोऽपि नश्यति ॥९१॥

दशदिक्सर्वसत्त्वानामीते[6]श्चोपद्रवस्य वा ।
[7]निपातनं रिपवे श्रेष्ठमिदं[8] चोदनमुत्तमम् ॥९२॥

मुद्गरेण प्रचण्डेन उरसि ताडयेद्व्रती ।
नश्यति जीविताच्छक्रः वज्रधर्मवचो यथा ॥९३॥

स्फालनं कुट्टनं चिन्तेत् कुठाराद्याद्धि वज्रिणः ।
म्रियते त्रिकायवरदो वज्रसत्त्वोपि दारुणः ॥९४॥

रक्षार्था[9]नि तु मन्त्राणि देवतानि च[10] कीलयेत् ।
एषो हि मारणाग्राग्रः समयो दुरतिक्रमः ॥९५॥

स्कन्धवज्रेण यावन्तः सत्त्वास्तिष्ठन्तिमण्डले ।
द्योतं[11]नात्मगतां चिन्तेदेवं तुष्यन्ति नान्यथा ॥९६॥

---

१. ASB पु° । २. ASB दुष्टसत्त्वेन । ३. BOI & CU तान् । ४. ASB °ये तैस्तु । ५. ASB & CU °टेदं । ६. CU °मीनै° । ७. CU adds भयं before ८. CU omits ९. ASB °थादीनि । १०. ASB °तादीनि । ११. ASB घा° ।

बुद्धो वज्रधरः शास्ता वज्रधर्मोऽपि चक्रिणः[1] ।
म्रियते व्याड[2]योगेन चित्तवज्रवचो[3] यथा ॥९७॥

इत्याह भगवान् महाक्रू[4]रसमयवज्रक्रोधः ।

अथ वज्रधरो राजा सर्वाकाशो[5] महामुनिः ॥
सर्वाभिषेकसम्बुद्धो ज्ञानवज्रमुदीरयत् ॥९८॥
अहो स्वभावसंशुद्धं वज्रयानमनुत्तमम् ॥
अनुत्पन्नेषु धर्मेषु उत्पत्तिः कथिता जिनैः ॥९९॥

तत्रेदं क्षुद्र[6]कर्मरहस्यम् ।

खटिकाङ्गारेण लिखेत्सर्पं[7] विकृतं तु भयप्रदम् ।
कृष्णज्वालाकुलं क्रुद्धं द्विजिह्वं दंष्ट्रमालिनम् ॥१००॥

तत्रेदं क्रूरनागचोदनहृदयम् ।

॥ खँ ॥

वक्त्र[8]मध्यगतं चिन्तेद्विषं हालाहलप्रभम् ।

तत्रेदं सर्वविषाकर्षणहृदयम् ।

॥ ह्रीः ॥

त्रैधातुकस्थितं सर्वं विषं विविधसम्भवम् ।
हृतं तु भावयेत्तेन पतमानं विचिन्तयेत् ॥१०१॥
स भवेत्तत्क्षणादेव विषोदधिसुदारुणः ।
स्पृष्टमात्रे जगत्सर्वं नाशयेन्नात्र संशयः ॥१०२॥

इत्याह च ।

मण्डूकवृश्चिकादीनि सर्पाणि विविधानि च ।
कर्तव्यानि विधानेन यागोत्पत्ति[9]कलक्षणैः ॥१०३॥

तत्रेदं सर्वविषमहासंक्रमणहृदयम् ।

---

१. ASB वा यदि । २. ASB & BOI °ध्याम° । ३. ASB धर्मो । ४. BOI omits. ५. CU °कार° । ६. ASB adds वज्र before. ७. BOI सर्व° । ८. ASB चक्र° । ९. BOI °पक्षिक° ।

॥ ओँ ॥

दुष्टवज्रविषादीनि ये चान्ये विषदारुणाः ।
आकृष्य[1] ज्ञानचक्रेण[2] प्रेरणं खवज्रमण्डले ॥१०४॥

इत्याह भगवान् महाविषसमयवज्रः । तत्रेदं विष[3]चिकित्सनवज्रहृदयम् ।

॥ हूँ ॥

हृदये तं महावज्रं सितवर्णं विचिन्तयेत् ।
रश्मिमेघं महादीप्तं चन्द्रांशुमिव निर्मलम्[4] ॥१०५॥
चतुः स्थानप्रयोगेण संहरन् तत्र तिष्ठते[5] ।
द्वित्रिवारान् प्रभावित्वा छेदयन्तं विचिन्तयेत् ॥१०६॥
खधातुं विषसम्पूर्णं निर्विषं कुरुते क्षणात् ।

इत्याह च ।

तत्रेदं सर्वविषाकर्षणहृदयम् ।

॥आः॥

गण्डपिटकलूताश्च[7] ये चान्ये व्याधयः स्मृताः ।
नश्यन्ति[8] ध्यानमात्रेण वज्रपाणिवचो यथा ॥१०७॥
अष्टपत्रं महापद्मं शशाङ्कमिव निर्मलम् ।
तत्र मध्यगतं चिन्तेत्पञ्चरश्मिप्रपूरितम् ॥१०८॥
[10]संहरेत्कृष्णसमयं चोदने[11] सितसन्निभम् ।
इदं ध्यानपदं गुह्यं रहस्यं ज्ञाननिर्मलम् ॥इति॥१०९॥

तत्रेमानि बाह्याध्यात्मिकव्याधिचिकित्सावज्रहृदयमन्त्राक्षरपदानि ।

॥जिनजिक्॥ आरोलिक् । वज्रधृक् ॥

यदेवाक्षरपदमिष्टं भवेद्भक्तिगुणावहम् ।
भावयेत्तादृशं व्याधिं [12]विश्ववज्रप्रचोदनैः ॥११०॥

---

१. CU °ष्यन्ति । २. ASB °वज्रेण । ३. CU adds °समय° । ४. ASB °त्सा नाम । ५. BOI शीतलम् । ६. BOI संहरन् तिष्ठति क्षणात् । ७. ASB & BOI °मपि । ८. ASB °कैर्नृणां । ९. ASB भविष्य° । १०. BOI संहारकं । ११. ASB °नैः, CU °२ । १२. ASB & BOI बिम्बं ।

वानराकारसमयमथवा श्वानसम्भवम् ।
स्वकायवाक्चित्तपदे[1] निश्चरन्तं[2] विचिन्तयेत् ॥१११॥
चक्रं वाऽप्यथवा वज्रं ध्यात्वा वज्रपदे स्थितः ।
कायवाक्चित्तसमयं चूर्णितं[3] तेन भावयेत् ॥११२॥
ततः प्रभृति संबुद्धा बोधिसत्त्वा महायशाः ।
अधिष्ठानपदं रम्यं ददन्ति हृष्टचक्षुषः ॥११३॥

इत्याह च ।

स्वकायचित्तवज्रेषु बुद्धमेघान् विचिन्तयेत् ।
वज्ररागं[4] महामेघं भावयेद्व्याधिमोक्षणम् ॥इति॥११४॥
दशदिक्सर्वबुद्धानां वज्रसत्त्वसुधीमताम्[5] ।
क्रुद्धो[6] भावयतस्तस्य[7] मारणं पारमार्थिकम् ॥११५॥
अनेन ध्यानमात्रेण[8] कर्मजं वापि यत्स्मृतम् ।
शताष्टजपयोगेन सप्त[9] दिनैर्विनश्यति ॥११६॥
अथवा स्वमन्त्रराजेन वज्रध्यानविधिः स्मृतः ।
एषो हि सर्वव्याधीनां समयो दुरतिक्रमः ११७॥
अथ वज्रधरो राजा ज्ञानाङ्कुशमहाद्युतिः ।
काममोक्षमहावज्र इदं वचनमब्रवीत् ॥११८॥
स्वप्नोपमेषु धर्मेषु अनुत्पादस्वभाविषु ।
स्भावशुद्धतत्त्वेषु भ्रान्तिवज्रः प्रगीयते ॥११९॥
पश्यन्ति साधका नित्यं जपध्यानार्थतत्पराः ।
बुद्धांश्च बोधिसत्त्वांश्च द्विधाभेदेन दर्शनम् ॥१२०॥

तत्रेदं महास्वप्नसमयपदम् ।

बोधि[10] ज्ञानाग्रसम्प्राप्तं पश्यति ज्ञानं[11] सुप्रभम् ।
बुद्धसम्भोगकायं वा[12] आत्मानं लघु पश्यति॥१२१॥

---

१. ASB °देन । २. ASB °न्ति । ३. ASB वर्णितं । ४. ASB °जं । ५. ASB °सत्वा धीमताः । ६. BOI °द्धान् । ७. MSS भावयेत्तस्य । ८. ASB BOI °मार्गेण । ९. ASB & CU दिनैः सप्तैः । १०. ASB प्रज्ञा° । ११. CU बुद्ध° । १२. ASB कार्यं च ।

त्रैधातुकमहासत्त्वैः पूज्यमानं स पश्यति ।
बुद्धैश्च बोधिसत्त्वैश्च पञ्चकामगुणैरपि[1] ॥
पूजितं पश्यते बिम्बं[2] महाज्ञानक्षमप्रभम् ॥१२२॥
वज्रसत्त्वं महाबिम्बं वज्रधर्मं महाशयम्[3] ।
स्वबिम्बं पश्यते स्वप्ने गुह्यवज्रमहायशाः ॥१२३॥
प्रणमन्ति महाबुद्धा बोधिसत्त्वाश्च वज्रिणः[4] ।
द्रक्ष्यते ईदृशं स्वप्नं कायवाक्चित्तसिद्धिदम् ॥१२४॥
सर्वालङ्कारसम्पूर्णां सुरकन्यां मनोरमाम् ।
दारकं दारिकां पश्यन स सिद्धिमधिगच्छति ॥१२५॥
दशदिक्सर्वबुद्धानां क्षेत्रस्थं पश्यति ध्रुवम् ।
ददन्ति हृष्टचित्तात्मा धर्मगञ्जं[5] मनोरमम् ॥१२६॥
धर्मचक्रगतं कायं सर्वबुद्धैः परिवृतम् ।
पश्यते योगसमये ध्यानवज्रप्रतिष्ठितः ॥१२७॥
आरामोद्यानविविधान् सुरकन्याद्यलङ्कृतान् ।
पश्यति ध्यानसमये सर्वबुद्धैरधिष्ठितान् ॥१२८॥
बुद्धैश्च बोधिसत्त्वैश्च अभिषिक्तं[6] स पश्यति ।
विद्याधरमहाराजैः पूज्यमानं स पश्यति ॥१२९॥

इत्याह च ॥

विविधान् वज्रसम्भूतान् स्वप्नान् पश्यति निर्मलान् ।
सिध्यतेऽनुत्तरं तस्य कायवाक्चित्तवज्रजम् ॥१३०॥
चण्डालध्वान्तयोगादीन् पश्यति यदि वज्रधीः[7] ।
सिध्यते चित्तनिलयं वज्रसत्त्वस्य[8] धीमतः[9] ॥१३१॥

तत्रेदं स्वप्नविचारणसमयहृदयम् ।

स्वचित्तं चित्तनिध्यप्तौ सर्वधर्माः प्रतिष्ठिताः ।
खवज्रस्था ह्यमी धर्मा न धर्मा न च धर्मता ॥१३२॥

---

१. ASB & CU ध्रुवम् । २. CU विश्वं । ३. ASB °यश° । ४. ASB चाभि° । ५. BOI °राज° । ६. ASB °षेकं । ७. ASB °धृक् । ८. ASB & CU सत्त्वोस्य । ९. ASB वा° ।

अथ भगवन्तः सर्वतथागता आश्चर्यप्राप्ता अद्भुतप्राप्ताः[१] सर्वतथागतकायवाक्[२]चित्त-संशयच्छेत्तारं वज्रसत्त्वं पप्रच्छुः। किमिदं भगवन्—

निःस्वभावेषु[३] धर्मेषु धर्मतत्त्वमुदाहृतम्।
अहो विस्मयसम्भूतमाकाशाकाशभावनम्॥ इति ॥१३३॥

अथ भगवान् कायवाक्चित्तवज्रपाणिस्तथागतः सर्वतथागतानेवमाह। भगवन्तः सर्वतथागता आकाशं न केनचिद्धर्मेण संयुक्तं नाप्यसंयुक्तम्[४] न चाकाशस्यैवं भवति। सर्वगतो[५]ऽयं सर्वत्रानुदर्शी च। एवमेव भगवन्तः सर्वतथागताः सर्वधर्माः[६] स्वप्नाः स्वप्नसमयसम्भूताश्चानुगन्तव्याः। तद्यथापि नाम भगवन्तः सर्वतथागता आकाश-मनिरूप्यमनिदर्शनमप्रतिपाद्यम्[७]। एवमेव भगवन्तः सर्वतथागताः सर्वधर्मा अनुगन्तव्याः।

तद्यथापि नाम भगवन्तः सर्वतथागता[८]ः सर्वधर्मकायवाक्चित्तवज्रपदसमयं सर्वत्रा-नुगतमेकस्वभावं यदुत चित्तस्वभावम्। यश्च कायवाक्चित्तधातुराकाशधातुश्चाक्षय-मेतदद्वैधीकरम्।

तद्यथापि नाम भगवन्तः सर्वतथागता आकाशधातुस्थिताः सर्वधर्माः,[९] स चाकाश-धातुर्न कामधातुस्थितो न रूपधातुस्थितो नारूपधातुस्थित[१०]ः। यश्च धर्मधातु[११]स्त्रैधातुके न स्थितः तस्योत्पादो नास्ति, यस्योत्पादो नास्ति नासौ केनचित् धर्मेण सम्भाव्यते। तस्मात्तर्हि भगवन्तः सर्वतथागता निःस्वभावाः सर्वधर्मा इति।

तद्यथापि नाम भगवन्तः सर्वतथागता बोधिचित्तं सर्वतथागतज्ञानोत्पादनवज्रपदकरम्। तच्च बोधिचित्तं न कायस्थितं न वाक्स्थितं न चित्तस्थितम्। यश्चधर्मस्त्रैधातुके न स्थितः तस्योत्पादो नास्ति। इदं सर्वतथागतज्ञानोत्पादनवज्रपदम्।

न च भगवन्तः सर्वतथागताः स्वप्नस्यैवं भवति अहं त्रैधातुके स्वप्नपदं दर्शयेयम्। न च पुरुषस्यैवं भवति अहं स्वप्नं पश्येयमिति। सा च त्रैधातुकक्रिया स्वप्नोपमा स्वप्नसदृशी स्वप्नसम्भूता। एवमेव भगवन्तः सर्वतथागता यावन्तो दशदिक्सर्वलोकधातुषु बुद्धाश्च बोधिसत्त्वाश्च यावन्तः सर्वसत्त्वाः सर्वे ते स्वप्ननैरात्म्यपदेनानुगन्तव्याः।

---

१. ASB omits. २. ASB adds °समय°। ३. ASB omits ४. ASB omits ५. ASB तथाग°। ६. BOI omits ७. ASB omits; CU अप्रतिघं। ८. CU omits from here to सर्वतथागताः below. ९. BOI & CU °सत्त्वाः। १०. CU omits. ११. ASB omits °धातु°।

तद्यथापि नाम भगवन्तः सर्वतथागताः चिन्तामणिरत्नं सर्वरत्नप्रधानं सर्वगुणोपेतम्। ये च सत्त्वाः प्रार्थयन्ति सुवर्णं वा रत्नं वा रौप्यं वा तत् सर्वं चिन्ता[1]मात्रेणैवं[2] सम्पादयन्ति। तच्च रत्नाद्यं न चित्तस्थितं न चिन्तामणिस्थितम्। एवमेव भगवन्तः सर्वतथागताः सर्वधर्मा[3] अनुगन्तव्याः।

अथ[4] भगवन्तः सर्वतथागताः प्रहर्षोत्फुल्ललोचनाः सर्वतथागतकायवाक्चित्तवज्रं तथागतमेवमाहुः। आश्चर्यं भगवन् यत्र हि नाम आकाशधातु[5] समवसरेषु[6] सर्वधर्मेषु[7] बुद्धधर्माः समवसरणं गच्छन्ति।

अथ ते सर्वबुद्धबोधिसत्त्वा भगवन्तो वज्रपाणेस्तथागतस्य पादयोः प्रणिपत्यैवमाहुः। यद्भगवता सर्वमन्त्रवज्र[8]सिद्धिसमुच्चयं भाषितं तानि च सर्वमन्त्रवज्रसमुच्चयसिद्धीनि कुत्र स्थितानि[9]।

अथ वज्रपाणिस्तेषां तथागतानां बोधिसत्त्वानां च साधुकारं दत्त्वा तान् सर्वतथागतानेवमाह। न च भगवन्तः सर्वतथागताः सर्वमन्त्रसिद्धीनि सर्वमन्त्रकायवाक्चित्तवज्रस्थितानि। तत्कस्य हेतोः[10]। परमार्थतः कायवाक्चित्तमन्त्रसिद्धीनामसम्भवात्। किन्तु भगवन्तः सर्वतथागताः सर्वमन्त्रसिद्धीनि सर्वबुद्धधर्माणि स्वकायवाक्चित्तवज्रस्थितानि। तच्च कायवाक्चित्तं[11] न कामधातुस्थितं न रूप[12]धातुस्थितं ना[13]रूपधातुस्थितम्। न चित्तं कायस्थितं न कायश्चित्तस्थितः न वाक् चित्तस्थिता न चित्तं वाक्स्थितम्। तत्कस्य हेतोः? आकाशवत् स्वभावशुद्धत्वात्।

अथ ते सर्वतथागताः सर्वतथागतकायवाक्चित्तवज्रं तथागतमेवमाहुः। सर्वतथागतधर्मा भगवन् कुत्र स्थिताः क्व वा सम्भूताः। वज्रसत्त्व आह। स्वकायवाक्चित्तसंस्थिताः स्वकायवाक्चित्तसम्भूताः। भगवन्तः सर्वतथागता आहुः। स्वकायवाक्चित्तवज्रं कुत्र स्थितम्? [14]आकाशस्थितम्। आकाशं कुत्र स्थितम्? न क्वचित्।

अथ ते सर्वबुद्धबोधिसत्त्वा आश्चर्यप्राप्ता अद्भुतप्राप्ताः स्वचित्तधर्मताविहारं ध्यायंस्तूष्णीं[15] स्थिता अभूवन्निति।

इति श्रीसर्वतथागतकायवाक्चित्तरहस्यातिरहस्ये गुह्यसमाजे महागुह्यतन्त्रराजे सर्वचित्तसमयसारवज्रसम्भूतिर्नाम पटलः पञ्चदशोऽध्यायः।

---

१. ASB & BOI चिन्तित°। २. BOI °वं। ३. BOI & CU add बुद्धधर्मा ४. ASB adds ते। ५. CU omits °धातु°। ६. ASB °रणे°। ७. BOI & CU add बुद्धधर्मेषु। ८. CU omits °वज्र°। ९. ASB adds क्व सम्भूतानि। १०. BOI & CU omit परमार्थतः......सिद्धीनामसंभवात्। ११. ASB adds °वज्र°। १२. BOI रूप्य°। १३. BOI °प्य°। १४. ASB omits. १५. CU ध्यापन्नं।

# षोड़शः पटलः

अथ भगवन्तः सर्वतथागताः पुनः समाजमागम्य भगवन्तं सर्वतथागतकायवाक्चित्तवज्रं तथागतं सर्वतथागतकायवाक्चित्तवज्रपदैरर्घ्येभ्य सर्वतथागतरत्नवज्रपूजाव्यूहैः पूजयामासुः । अथ भगवान् वज्रपाणिस्तथागतः सर्ववज्रमण्डलसिद्धि[1]समयराजव्यूहं नाम समाधिं समापद्येदं वज्रकायमण्डलं सर्वबुद्धानां[2] स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास[3] ।

अथातः संप्रवक्ष्यामि कायमण्डलमुत्तमम् ।
चित्तवज्रप्रतीकाशं सर्व[4]मण्डलमुत्तमम् ॥१॥
षोडशहस्तं प्रकुर्वीत चतुरस्रं सुशोभनम् ।
मण्डलं सर्वबुद्धानां कायवज्रप्रतिष्ठितम् ॥२॥
तस्याभ्यन्तरतश्चक्र[5]मालिखेद्विधि[6]वज्रया ।
मुद्रावज्रपदं कुर्यान्मन्त्राणां गुह्यमुत्तमम् ॥३॥
मध्ये वैरोचनपदमक्षोभ्यादीन् समालिखेत् ।
कायवाक्चित्तवज्राग्रीन्[7] सर्वकोणे[8] निवेशयेत् ॥४॥
क्रोधान् समालिखेद्द्वारि महाबलपराक्रमान् ।
पूजां कुर्वीत मन्त्रज्ञो गुह्यवज्रप्रभाविताम् ॥५॥
एषो हि सर्वक्रोधानां[9] समयो दुरतिक्रमः ।
अवश्यमेव दातव्यं विण्मूत्राद्यं विशेषतः ॥६॥

एषो हि सर्वमन्त्राणां[10] समयः कायवज्रिणाम् ।

॥ सर्वतथागतकायमण्डलम् ॥

अथ भगवान् वज्रपाणिस्तथागतः सर्ववाग्वज्रसमयमेघव्यूहं नाम समाधिं समापद्येदं वाग्वज्रमण्डलं स्वकायवाक्चित्तवज्रेभ्य उदाजहार ।

अथातः संप्रवक्ष्यामि वाङ्मण्डलमुत्तमम् ।
चित्तवज्रप्रतीकाशं सर्वमण्डलमुत्तमम् ॥७॥

---

१. ASB °सिह°, BOI °सिद्ध° । २. CU °तथागतानां । ३. ASB उदाजहार । ४. CU °स्व° । ५. ASB °रं चक्रं । ६. BOI & CU °विना । ७. ASB °वज्रश्री° । ८. ASB °णेषु । ९. ASB चक्राणां । १०. ASB धर्माणां ।

विंशतिहस्तं प्रकुर्वीत चतुरस्रं विधानतः ।
चतुष्कोणं चतुर्द्वारं सूत्रयेद्वज्रभावनैः ॥८॥
स्ववाङ्[1]मण्डलपदं वाक्यवज्रगुणावहम् ।
वज्रधर्ममहाराजं विद्वेषमवतारयेत् ॥९॥
तस्य मध्ये महाचक्रमालिखेत्परिमण्डलम् ।
सर्वमुद्रां समासेन आलिखेद्विधितत्परः ॥१०॥
अमितायुर्महामुद्रां तस्य मध्ये निवेशयेत् ।
तदेव वज्रपदं रम्यं सर्वेषां परिकल्पयेत् ॥११॥
परिस्फुटं विधानेन कृत्वा मण्डलमुत्तमम् ।
गुह्यपूजां ततः कुर्यादेवं[2] तुष्यन्ति वज्रिणः ॥१२॥
विण्मूत्रशुक्रसमयैः पूज्य सिद्धिरवाप्यते ।
एषो हि सर्वबुद्धानां समयो दुरतिक्रमः ॥१३॥

॥ सर्वतथागतवाङ्मण्डलम् ॥

अथ भगवान् वज्रपाणिस्तथागतः समन्त[3]मेघव्यूहं नाम समाधिं समापद्येदं परमगुह्यमण्डलरहस्यं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ।

यस्य वज्रधराग्रस्य मध्ये बिम्बं समालिखेत् ॥
भवे[4]न्मण्डलपदं तस्य कायवाक्चित्तगुह्यजम् ॥१४॥

इति सर्वतथागतकायवाक्चित्तवज्रज्ञानरहस्योऽयं[5] परमगुह्यः ।

अथ भगवान् वज्रपाणिस्तथागतः सर्वमण्डलचक्रसम्भवं नाम समाधिं समापद्येदं सर्वमण्डलकायवाक्चित्तगुह्यजं स्वकायवाक्चित्तवज्रेभ्य उदाजहार । ततो मण्डलमन्त्रः ॥ मन्त्राक्षरहृदयसूत्राक्षर[6]पदानि ॥

॥ हूँ ओं आः ॥

पातनं वज्रसूत्रस्य रजस्यापि निपातनम् ।
न कार्यं मन्त्रसत्त्वेन कारयन् बोधिदुर्लभः ॥१५॥

---

१. BOI & CU °काय° । २. BOI कृत्वा एवं । ३. BOI °स्त° । ४. ASB, BOI & CU भव° । ५. BOI, CU & RASB स्यादगुह्यसमाजे । ६. CU omits हृदयसूत्राक्षर ।

तस्मात्समयविधानज्ञोऽवतार्य्य[1] मन्त्रदेवताान्[2]।
अधिष्ठानपदं ध्यात्वा मण्डलानां विकल्पनम् ॥१६॥
वैरोचनमहाराजं लोचनां चावतारयेत् ।
कायमण्डलपदं रम्यं कायवज्रगुणावहम् ॥१७॥
वज्रधर्ममहाराजं सधर्मं चावतारयेत् ।
इदं तत्सर्वमन्त्राणां[3] रहस्यं परमशाश्वतम्[4] ॥१८॥
वज्र[5]सत्त्वमहाराजं मामकीं चावतारयेत् ।
इदं तत्सर्वमन्त्राणां[6] रहस्यं परमाद्भुतम् ॥१९॥
एवं कृतेन सान्निध्यं स्वयमेव मनीषिणः ।
आगत्य गुह्यपरमं लिखन्ति हरिषा[7]न्विताः ॥२०॥

इत्याह च ।

कर्तव्यं मन्त्रसिद्धे च[8] वज्रगुह्यं महाद्भुतम् ।
आकृष्य क्रोधराजेन सर्वबुद्धांस्तु पूजयेत् ॥२१॥
त्रिकाल[9]समये पूजा त्रिवज्रामलवज्रिणः ।
कर्तव्यं त्रिवज्रयोगेन मन्त्रसिद्धिप्रवर्तनम् ॥ इति ॥२२॥

इत्याह च ।

सर्वेषामेव मन्त्राणां बलिं दद्यान्महाद्भुतम् ।
विण्मूत्रमांसतैलं च पञ्चमं चित्तसम्भवम् ॥२३॥
शुक्रेण सर्वमन्त्राणां प्राणनं[10] समुदाहृतम् ।
एषो हि समयश्रेष्ठो बुद्धबोधिप्रपूरकः ॥२४॥
सूत्रस्य पातनमिदं स्वयमेव समाचरेत् ।
वैरोचनं प्रभावित्वा वज्रसत्त्वं विभावयेत् ॥२५॥
अथवाऽमृतवज्राख्यं शिष्यं[11] वज्रमहाद्युतिम् ।
विभावयेत्कर्मपदं सर्वबुद्धनिषेवितम् ॥२६॥

---

१. ASB & CU °वसायं । २. BOI समयदेव°, CU समतेव । ३. CU द्धानां । ४. CU °माद्भुतम् । ५. CU omits two lines. ६. BOI बुद्धानां । ASB & RASB हर्षा° । ८. ASB, CU & RASB °सिद्धेन । ९. BOI गय, RASB °ष्काल । १०. CU °शन, ASB °णेन । ११. CU लिख्यं ।

पञ्चबुद्धमहाराजं सूत्रं वज्रगतं न्यसेत् ।
एषो हि सर्वबुद्धानां रहस्यं परमाद्भुतम् ॥२७॥
पञ्चविंशतिभेदेन रजं[1]स्यापि निपातनम् ।
इदं तत्सर्ववज्राणां रहस्यं बोधिमुत्तमम् ॥२८॥
सर्वेषामेव मन्त्राणां वज्रहूँकारभावना ।
कायवाक्चित्तसमयं[2] पञ्चस्थानेषु भावयेत् ॥२९॥
एवं कृतेन सान्निध्यं त्रिवज्राभेद्यवज्रजाः ।
कुर्वन्ति भयसंत्रस्ता वज्रसत्त्वस्य धीमतः ॥३०॥
न्यासं कलशवज्राणां मन्त्रतन्त्रा[3]न्वितैः स्मृतम् ।
वज्रसत्त्वं समाधिस्थं कल्पयेत् दृढ़बुद्धिमान् ॥३१॥
होमं कुर्वीत मन्त्रज्ञः सर्वसिद्धिफलार्थिनः ।
विण्मूत्रमांसतैलाद्यैराहुतिं प्रतिपादयेत् ॥३२॥
पूर्णां वज्राहुतिं दद्यात् त्रिवज्राद्यं समाचरेत् ।
शुक्रं वा अथवा विष्ठामभिमन्त्र्य विधानतः[4] ॥३३॥
भक्षयेद्वज्रयोगेन एवं सिद्धर्न दुर्लभा ।
कृत्वा वज्रं[5]महागुह्यं रहस्यं सर्ववज्रिणाम् ॥३४॥
स्त्रीरूपमन्त्रचक्रेण स्थिताः सत्त्वार्थचर्यया ।
॥ तत्रेदं सर्ववज्रमण्डलमन्त्राराधनरहस्यम् ॥३५॥
हस्तिमांसं हयमांसं[6] महामांसं च भक्षयेत् ।
दद्याद्धि सर्वमन्त्राणामेवं तुष्यन्ति नायकाः ॥३६॥
प्रत्यहं वज्रशिष्यस्य दर्शयेत् मण्डलं बुधः ।
विण्मूत्रमांसकृत्येन वज्रगुह्यपदेन च ॥३७॥
ओँकारं सर्वमन्त्राणां ध्यात्वा ज्वलति तत्क्षणात् ।
इत्याह च भगवान् महामन्त्रवज्रविद्यापुरुषवज्रः ।
साधनं सर्वसिद्धीनां महासमयसाधनम् ।
साधनीयं प्रयत्नेन बुद्धबोधिमपि स्वयम् ॥३८॥

---

१. रह° । २. ASB adds दिव्यं । ३. CU तत्त्वा° । ४. CU° भावतः । ५. ASB, CU & RASB यत्र । ६. MSS add श्वानमांसं ।

अन्तर्द्धानं बलं वीर्यं वज्राकर्षणमुत्तमम्।
सिध्यते मण्डले सर्वं कायवज्रवचो यथा ॥३९॥
विण्मूत्रं[1] च महामांसं समभागं तु कारयेत्;
शरावसम्पुटे स्थाप्य बुद्धैः सह च संवसेत् ॥४०॥

इत्याह च। तत्रेदं सर्वगुह्यवज्रकिङ्करमहासाधनपदं वरम्।

खवज्रमध्यगतं चिन्तेत् ह्रीः[2]कारं ज्वालसुप्रभम्।
खधातुं सर्वबुद्धैस्तु परिपूर्णं विभावयेत्।
कायवाक्चित्तपदं तेषां[3] तत्रं[4] मन्त्रे निपातयेत् ॥४१॥

तत्रेदं कायवाक्चित्तमन्त्रवज्राधिष्ठानपदम्।

॥ आः खँ वीः[5] ॥

वज्रपाणिमहाबिम्बं पद्मपाणिमहाद्युतिम्।
अपराजितमहाबिम्बं ध्यात्वा गुह्यपदं न्यसेत् ॥४२॥

तत्रेदं वज्रगुह्यपदम्।

सूर्यमण्डलमध्यस्थमक्षोभ्यं वा प्रकल्पयेत्।
अमितायुर्महाबिम्बं वज्रवैरोचनं तथा।
चोदयेद् हृदये सर्वान् तीव्रदुःखमहाद्युतीन् ॥४३॥

तत्रेदं सर्ववज्रहृदयवज्रसंचोदनम्।

॥ आँ ॥

महाशूलै[6]र्महावज्रैरङ्कुशैर्विविधैर्बलैः[7]।
चोदयेद्विधिवद्वज्रं बुद्धबोधिः प्रसिध्यति ॥४४॥

इत्याह च ॥

पर्वतेषु च रम्येषु द्वीपेषु विविधेषु च।
पक्षाभ्यन्तरपूर्णेन ध्रुवं बुद्धत्वमाप्नुयात् ॥४५॥
षट्त्रिंशत्सुमेरूणां यावन्तः परमाणवः।
परिवारगणास्तस्य सिध्यन्ते बोधिवज्रिणः ॥४६॥

---

१. CU विष्ठामूत्रं। २. BOI ह्रो, CU ह्रीँ। ३ RASB तता। ४. CU तन्त्र। ५. BOI आँ खँ वीँ, CU (१) वोँ, (२) वो। ६. ASB °सुरैः। ७. ASB °रैः। ८. CU सिद्धिमवा°।

दशदिक्सर्वबुद्धानां बुद्धक्षेत्राणि कारयेत्[१] ।
मध्ये [२]स्वदेवताबिम्बं ध्यात्वा वज्रेण[३] पातयेत् ॥४७॥

इत्याह च ।

द्वयेन्द्रियप्रयोगेण जुहुयादयुतं बुधः ।
एषो हि सर्वबुद्धानां समयो दुरतिक्रमः ॥४८॥
वैरोचनप्रयोगेण शिष्यं त्रिवज्रसम्भवम् ।
आःकारं कायवाक्चित्ते ध्यात्वा वज्रेण गृह्यते ॥४९॥
वज्रसत्त्वो महाराजो वैरोचनो महायशाः ।
कायवाक्चित्तसमयमधिष्ठानं ददाति हि ॥५०॥

तत्रेदं महामण्डलप्रवेशनवज्रपदम् ।

॥ आः खँ वीर हूँ ॥

[४]सर्वसमयकायवाक्चित्तहृदयमन्त्रवज्रोऽयम्[५] । तत्रेदं महावज्राभिषेकगुह्यज्ञानरहस्यम् ।

खधातुं सर्वबुद्धैस्तु परिपूर्णं विभावयेत् ।
वाद्यगन्धमहामेघैर्भावयेद्वज्रश्रोत्रधीः[६] ॥५१॥

इत्याह च ।

त्रिवज्रकायमन्त्रैस्तु[७] सर्षपैस्ताडयेत्[८] व्रती ।
अभिषेकं तदा तस्य स्वयमेव ददन्ति हि ॥५२॥
अथवा भावयेत् बुद्धान् वज्रसत्त्वसमाधिना ।
कलशान् समयाग्रैस्तु धारितान्[९] भावयेद्बुधः[१०] ॥५३॥
वज्रवैरोचनं चिन्तेत् शिष्यो दृढमतिस्तदा[११] ।
न्यासं कुर्वीत मन्त्रज्ञः कायवाक्चित्तवज्रिणः ॥५४॥

तत्रेदं सर्वाभिषेकरहस्यं सर्वाचार्यवाग्वज्रोदीरणम् ।

---

१. BOI काम°, ASB & RASB क्राम° । २. BOI & CU °ऽस्य । ३. ASB & RASB वक्षे·नि° । ४. BOI & CU add इति सर्वतथागतकायवाक्चित्त-वज्रगुह्याद् गुह्यसमाजे before सर्वं° । ५. RASB °जापं । ६. ASB & RASB have instead वाद्यगन्धादिसमयैर्मेघौघान् भावयेद्बुधः । ७. CU त्रिकायवज्रमेघैस्तु, BOI °मन्त्रैस्तु । ८. CU & RASB स्तोत्रयेत् । ९. BOI वाचितान्, CU भाषितान् । १०. CU व्रती । ११. ASB & RASB °ति सदा ।

अभिषेकं महावज्रं त्रैधातुकनमस्कृतम् ।
ददामि सर्वबुद्धानां त्रिगुह्यालय[1]संभवम् ॥५५॥

तत्रेदं सर्वाभिषेकं[2] महावज्रप्रार्थनाविधिरहस्यम् ।

बोधिवज्रेण बुद्धानां यथा दत्तो महामहः ।
ममापि त्राणनार्थाय खवज्राद्यं ददाहि मे ॥५६॥
अभिषेकं तदा तस्य दद्यात् प्रहृष्टचेतसः ।
देवताबिम्बयोगेन हृदयेऽधिपतिं न्यसेत् ॥५७॥
मन्त्राक्षरपदं दत्त्वा समयं च विधानतः ।
दर्शयेन्मण्डलं तस्य वज्रशिष्यस्य धीमतः ॥५८॥
समयं श्रावयेद्गुह्यं सर्वबुद्धैरुदाहृतम् ।
प्राणिनश्च त्वया घात्या वक्तव्यं च मृषा वचः ॥५९॥
अदत्तं च त्वया ग्राह्यं सेवनं योषितामपि[3] ।
अनेन वज्रमार्गेण वज्रसत्त्वान् प्रचोदयेत् ॥६०॥
एषो हि सर्वबुद्धानां समयः परमशाश्वतः ॥

इत्याह च ।

मन्त्रं दद्यात् तदा तस्य मन्त्रचोदनभाषितैः ॥६१॥
समाधिं मन्त्रराजस्य दत्त्वा गुह्यं समारभेत्[4] ।
धर्मं शृणोति गाम्भीर्यं बुद्धभूमिं[5] च प्राप्नुयात् ॥६२॥

इत्याह च भगवान् महासमयवज्रहासः[6] । तत्रेदं[7] सर्वकिङ्करगुह्यवज्ररहस्यम् ।

वज्रसत्त्वमहाज्ञानं वाक्यवज्रधरं तथा ।
कायवज्रमहान्यासैः[8] किङ्करं चोदयेत्सदा ॥६३॥

तत्रेदं वज्रज्ञानं[9]चक्रं चतुःसमयपदम् । समयचोदनं समयप्रेरणं समयमन्त्रणं समयबन्धनं चेति ।

---

१. CU° गुह्यं वज्र°, RASB° गुह्यवज्र° । २. ASB सर्वशिष्य° । ३. CU° येत् योषिता अपि । ४. After this BOI & CU repeat a long portion from शुक्रं वा अथवा विष्ठां etc. (P. 94) to बुद्धक्षेत्राणि कारयेत् (P. 96). ५. BOI बोधिं । ६. RASB °हारः । ७. CU सत्त्व° । ८. RASB °मासैः । ९. BOI & CU add °वज्रमन्त्र° ।

खधातुं विमलं शुद्धं सर्वधर्मविवर्जितम् ।
कुर्वन्ति पिण्डरूपेण त्रिवज्राद्भुतरूपिणः ॥६४॥

इत्याह भगवान् सर्वबुद्धैकपुत्रो महावज्रधरः[१] ।

बुद्धं वा वज्रसत्त्वं वा यदीच्छेद् वशमानितुम् ।
चिन्तयेदिदं महागुह्यं त्रिवज्राग्रधरं महत् ॥६५॥

खवज्रमध्यगतं चिन्तेन्मञ्जुवज्रं[२] महाबलम् ।
पञ्चबाणप्रयोगेण मुकुटाग्रं[३] तु संस्मरेत् ॥६६॥

पञ्चस्थानेषु मन्त्रज्ञः क्रूरवज्रेण पातयेत्[४] ।
मूर्च्छितं[५] भावयेत् त्रस्तं[६] बालबुद्धिं[७] महायशाः ॥६७॥

पक्षमेकमिदं ध्यानं कर्तव्यं गुह्यचोदनैः ।
रहस्यं सर्वमन्त्राणां गीतं वज्रार्थबुद्धिना ॥६८॥

खवज्रमध्यगतं चिन्तेद्बुद्धमण्डलमुत्तमम् ।
हूँकारवज्रमन्त्राद्यैः त्रिवज्रादीन् प्रभावयेत् ॥६९॥

ओँकारं चक्षुर्गतं[८] ध्यात्वा दर्शयेत्[९] विधानतः ।
पश्येत सर्वमन्त्राणां बिम्बं त्रिकायवज्रिणाम् ॥७०॥

क्षुत्तृषाद्यैर्महाक्लेशैरिदं योगं विचिन्तयेत् ।
नश्यन्ति[१०] सर्वदुःखानि चित्तवज्रवचो यथा ॥७१॥

वैरोचनमहाबिम्बं ध्यात्वा सर्वार्थसम्पदम् ।
वंकारं वक्त्रगतं ध्यात्वा ओँकारं जिह्वागं न्यसेत् ॥७२॥

आलयं सर्वभक्ष्याणां चिन्तामणिविभूषितम् ।
सर्वदुःखहरं शान्तं ज्ञानवज्रप्रभावितम् ॥७३॥

इत्याह भगवान् चिन्तामणिवज्रः । अथ भगवान् वज्रपाणि[११]स्तथागतः महावीर-वज्रतथागतं वज्रभावनावज्रपदाग्रं वाग्वज्रेभ्यो निश्चारयामास[१२] ।

---

१. BOI & CU वज्रमहासत्त्वः । २. BOI & CU महावज्रं । ३. BOI रोमकूपाग्रे । ४ BOI घा° । ५. CU °तान् । ६. CU °स्तान् । ७. CU °द्धीन् । ८. ASB चक्र° । ९ ASB °येदिदं । १०. ASB & CU भ्रश्यन्ते । ११. BOI & CU add °वज्र° । १२. ASB °लयेत्, CU & RASB रयत or °रयेत् ।

॥ वीः ॥

खवज्रमध्यगतं चिन्तेद्बुद्धमण्डलसुप्रभम् ।
त्रिवज्रकाययोगेन निष्पाद्येदं विचिन्तयेत् ॥७४॥
सर्वालङ्कारसम्पूर्णं पीतं वज्रविजृम्भितम् ।
जटामुकुटधरं शान्तं ध्यात्वा सर्वं समारभेत् ॥७५॥

॥ वीरवज्रोर्मिमाला नाम समाधिः ॥

अथ भगवान् वज्रधरः समन्तनिर्घोषवज्रं नाम समाधिं समापद्येदं महावज्रभावनापदं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ।

॥ चुं[१] ॥

खवज्रमध्यगतं चिन्तेत्सूर्यमण्डलमुत्तमम् ।
बुद्धमेघान् विधानेन त्रिवज्रात्मा महायशाः ॥७६॥
पातनं कायवाक्चित्ते चुन्दवज्रीं[२] विभावयेत् ।
सर्वालङ्कारसम्पूर्णां सितवर्णां विभावयेत् ॥७७॥
वज्रसत्त्वमहाराजं ध्यात्वा मन्त्रपदं न्यसेत् ।
॥ वज्ररश्मिज्ञानसमयं[३] नाम समाधिः ॥७८॥

अथ भगवान् वज्रपाणिस्तथागतः सर्वाशावज्रसम्भोगं नाम समाधिं समापद्येदं समाधिवज्रनयं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ॥

॥ जँ ॥

खवज्रमध्यगतं चिन्तेद्बुद्धमण्डलमुत्तमम् ।
सर्वबुद्धान् विधानेन पातयेद्वज्रभावनैः ॥७९॥
निष्पादयेन्महायक्षं जम्भलं द्रव्यसाधकम् ।
यक्षरूपधरं शान्तं जटामुकुटवज्रिणम् ॥८०॥
पञ्चबुद्धान् विधानेन पञ्चस्थानेषु भावयेत् ।
वज्रामृतोदकं तस्य दद्याद्ध्यानपदे स्थितः ॥८१॥

---

१. ASB omits, BOI & CU वूं । २. ASB चन्द्र°, BOI & CU वृन्द° । ३. ASB, CU & RASB वज्रसमयज्ञानरश्मिमाला । ४. BOI & CU °चक्र° ।

वज्रसत्त्वं विधानेन मुकुटे तस्य चिन्तयेत् ।
एवं तुष्यति यक्षेन्द्रो जम्भलेन्द्रो महाद्युतिः ॥८२॥

॥ वज्रसमयद्रव्याराधनकेतुश्रीर्नाम समाधिः ॥

अथ भगवान् वज्रपाणिस्तथागतो वज्रकामोपभोगश्रियं नाम समाधिं समापद्येदं सर्वयक्षिणीसमयवज्रपदं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ।

॥ क्षिँ[१] ॥

खवज्रधातुमध्यस्थं चतुरस्रं सुशोभनम् ।
चतूरत्नमयं सर्वं पुष्पगन्धसमाकुलम् ॥८३॥
खधातुं सर्वयक्षिण्यैः परिपूर्णं विचिन्तयेत्[२] ।
हृदयमन्त्रपदं ध्यात्वा वज्रयोगं समारभेत् ॥८४॥

॥ सर्वयक्षिणीसमताविहारभावनवज्रो नाम समाधिः ॥

अथ भगवान् वज्रपाणिस्तथागतः सर्वबुद्ध[३]मन्त्रसिद्धिविजृम्भितवज्रं नाम समाधिं समापद्येमां हीनसिद्धिं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ।

कायवाक्चित्तसंसिद्धा[४] बुद्धरूपधरप्रभाः ।
जाम्बूनदप्रभाकारा हीनसिद्धिसमाश्रिताः ॥८५॥
अन्तर्द्धानादिसंसिद्धौ भवेद्वज्रधरः प्रभुः ।
यक्षराजादिसंसिद्धौ भवेद्विद्याधरः प्रभुः[५] ॥८६॥
तत्रेमानि सर्ववज्रसिद्धिरूपगुह्यमन्त्रसिद्धीनि ।
सर्वाणि चारुरूपाणि मन्त्रसिद्धिमनीषितैः ।
प्रीणयन्ति दर्शनेन लोकधातुं समन्ततः ॥८७॥
उष्णीषः सर्वसिद्धीनां भवेच्चिन्तामणिप्रभुः ।
बुद्धबोधिकरं श्रेष्ठं बुद्धवज्रप्रभावितम् ॥८८॥
इत्याह भगवान् सर्वाशापरिपूरकवज्रः ।

---

१. CU क्षं । २. BOI & CU add पातयेत् त्रिवज्रयोगेन बिम्बमेकं विचिन्तयेत् । त्रिकर्मवज्रयोगेन ध्यानं तस्य विचिन्तयेत् । मञ्जुवज्रः समाधिस्थो मुकुटे क्रोधं प्रभावयेत् । ३. BOI & CU °वज्र° । ४. CU °शुद्धो, BOI °शुद्धा । ५. CU omits this line.

अथ भगवान् वज्रपाणिः सर्वतथागताधिपतिः सर्वतथागतकायवाक्चित्तवज्रविद्याव्रतसमादानचर्यं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास।

कायवाक्चित्तवज्राणां[१] कायवाक्चित्तभावनम्।
स्वरूपेणैव तत्कार्यमेव[२] सिद्धिरवाप्यते ॥८९॥
तत्रेदं स्वकायवाक्चित्तविद्याव्रतम्।
जटामुकुटधरं बिम्बं सितवर्णनिभं महत्।
कारयेत् विधिवत् सर्वं मन्त्रसंवरसंवृतम् ॥९०॥
षोडशाब्दिकां गृह्य सर्वालङ्कारभूषिताम्।
चारुवक्त्रां विशालाक्षीं प्राप्य विद्याव्रतं चरेत् ॥९१॥
लोचनापदसंभोगी[३] वज्रचिह्नं तु[४] भावयेत्।
मुद्रामन्त्रविधानज्ञो मन्त्रतन्त्रसुशिक्षिताम् ॥९२॥
कारयेत्ताथागतीं भार्यां बुद्धबोधिप्रतिष्ठिताम्।
गुह्यपूजां प्रकुर्वीत चतुःसंध्यं महाव्रती ॥९३॥
कन्दमूलफलैः सर्वं भोज्यं भक्ष्यं समाचरेत्।
एवं बुद्धो भवेच्छीघ्रं महाज्ञानोदधिः प्रभुः ॥९४॥
षण्मासेनैव तत्सर्वं प्राप्नुयात् नात्र संशयः ॥इति॥
परस्वहरणं नित्यं घातनं च महाद्भुतम् ॥९५॥
रागवज्रपदं गुप्तं[५] इदं संवरसंवृतम्।
रागवज्राङ्कुशीं भार्यां[६] मामकीं गुणमेखलाम् ॥९६॥
वाग्वज्राग्रचित्तेभ्य इदं पूजयति सर्वथा।
स्वमुद्रां वाऽथवा चिन्तेद्ध्यानं त्र्यक्षरवज्रिणाम् ॥९७॥
पञ्चबुद्धाश्च सर्वज्ञाः[७] प्रीणन्ते नात्र संशयः।
वने[८] भिक्षां भ्रमेन्नित्यं साधको दृढनिश्चयः ॥९८॥
ददन्ति भयसंत्रस्ता भोजनं दिव्यमण्डितम्।
अतिक्रमेद्यदि[९] वज्रात्मा नाशं वज्राक्षरं भवेत् ॥९९॥

---

१. ASB omits। २. CU° र्यैणैव। ३. BOI & CU °गैः। ४. BOI & CU चिन्हैस्तु। ५. BOI, CU & RASB भुंक्ते। ६. CU कार्यां। ७. BOI पञ्चबुद्धाश्च संबुद्धाः, BOI & CU एवं बुद्धापि। ८. CU वनेषु। ९. BOI & CU त्रि°।

सुरीं नागीं महायक्षीमसुरीं मानुषीमपि ।
प्राप्य विद्याव्रतं कार्यं त्रिवज्रज्ञानसेवितम् ॥१००॥

इदं तत्सर्वमन्त्राणां गुह्यं तत्त्वं महानयम् ।
त्रिवज्रज्ञानसम्भूतं बुद्धबोधिप्रवेशकम् ॥१०१॥

इत्याह भगवान् सर्वतथागतविद्याव्रतसमयतत्त्ववज्रः ।

इति श्रीसर्वतथागतकायवाक्चित्तरहस्यातिरहस्ये गुह्यसमाजे महागुह्यतन्त्रराजे सर्वसिद्धिमण्डलवज्राभिसम्बोधिर्नाम पटलः षोडशोऽध्यायः ॥

१. CU° चक्र° ।

# सप्तदशः पटलः

अथ भगवन्तः सर्वतथागताः पुनः समाजमागम्य भगवन्तं सर्वतथागतकायवाक्चित्त-वज्रं तथागतमनेन स्तोत्रराजेनाध्येषितवन्तः ।

अक्षोभ्यवज्र महाज्ञान वज्रधातु महाबुध ।
त्रिमण्डल त्रिवज्राग्र घोषवज्र[1] नमोऽस्तु ते ॥१॥

वैरोचन महाशुद्ध[2] वज्रशान्त महारत ।
प्रकृतिप्रभास्वरान् धर्मान् देश वज्र नमोऽस्तु ते ॥२॥

रत्नराजसुगाम्भीर्य खवज्राकाशनिर्मल ।
स्वभावशुद्धनिर्लेप कायवज्र नमोऽस्तुते ॥३॥

वज्रामित[3]महाराज निर्विकल्प खवज्रधृक् ।
रागपारमिताप्राप्त भाष वज्र नमोऽस्तु ॥४॥

अमोघवज्र सम्बुद्ध[4] सर्वाशापरिपूरक ।
शुद्धस्वभावसंभूत वज्रसत्त्व नमोऽस्तु ते ॥५॥

एभिः स्तोत्रपदैः शान्तैः सर्वबुद्धप्रचोदितैः ।
संस्तूयाद्वज्रसंभोगात्[5] सोऽपि वज्र[6]समो भवेत् ॥६॥

अथ वज्रधरः शास्ता सर्वबुद्धानुकम्पकः ।
वज्रगुह्यपदं शुद्धं वाग्वज्रं समुदीरयत् ॥७॥

अहो हि सर्वबुद्धानां धर्मधातु महाक्षरम् ।
प्रकृतिप्रभास्वरं शुद्धं खधातुमिव निर्मलम् ॥इति॥८॥

अथ वज्रपाणिः सर्वतथागताधिपतिरिदं सर्वबुद्धकायवज्रसमयं स्वकायवाक्चित्त-वज्रेभ्यो निश्चारयामास ॥

समयचतुष्टयं रक्ष्यं[7] बुद्धैर्ज्ञानोदधिप्रभैः ।
महामांसं सदा भक्ष्यमिदं समयमुत्तमम् ॥९॥

---

१. BOI & CU गुह्य । २. BOI शान्त । ३. BOI °मुख । ४. BOI & CU अमोघसिद्धिवज्र । ५. RASB °गां । ६. BOI °बुद्ध° । ७. BOI रक्षेद्°

अथ वज्रपाणिः सर्वतथागताधिपतिरिदं सर्वबुद्धवाग्वज्रसमयं स्वकायवाक्चित्त-वज्रेभ्यो निश्चारयामास ।

समयचतुष्टयं रक्ष्यं वाक्यवज्रमहाक्षरैः ।
विण्मूत्रं च सदा भक्ष्यमिदं गुह्यं महाद्भुतम् ॥१०॥

अथ वज्रपाणिः सर्वतथागताधिपतिरिदं वज्रधरचित्तवज्रसमयं स्वकायवाक्चित्त-वज्रेभ्यो निश्चारयामास ॥

समयचतुष्टयं रक्ष्यं वज्रसत्त्वैर्महर्द्धिकैः ।
रुधिरं शुक्रसंयुक्तं सदा भक्ष्यं दृढव्रतैः ॥११॥
कायवाक्चित्तवज्राणाम् समयोऽयं महाद्भुतः ।
शाश्वतं सर्वबुद्धानां संरक्ष्यो वज्रधारिभिः[1] ॥१२॥
यश्चेमं[2] समयं रक्षेद्वज्रसत्त्वो महाद्युतिः ।
कायवाक्चित्तगतं तस्य बुद्धो भवति तत्क्षणात् ॥१३॥

अथ वज्रपाणिः सर्वतथागताधिपतिः प्रत्येकबुद्धसमयवज्रं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ।

देशना कायिकी तेषां कायवज्रप्रतिष्ठिता ।
सत्त्वावतारणं शीलसमयः परमशाश्वतः ॥१४॥

अथ वज्रपाणिः सर्वतथागताधिपतिः श्रावकशिक्षा[3]समयं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ।

दशकुशलान् कर्मपथान् कुर्वन्ति ज्ञानवर्जिताः[4] ।
हीनाधिमुक्तिकास्सर्वे समयोऽयं महाद्भुतः ॥१५॥

अथ वज्रपाणिः सर्वतथागताधिपतिर्ब्रह्मसमयं स्वकायवाक्चित्तेभ्यो निश्चारयामास ।

मोहमात्रेण यत्कर्म करोति भयभैरवम् ।
बुद्धबोधिप्रणेतारं भवते[5] कायवज्रता[6] ॥१६॥

अथ वज्रपाणिः सर्वतथागताधिपतिः रुद्रसमयं स्वकायवाक्चित्तेभ्यो निश्चारयामास ।

---

१. BOI & CU °चारिणैः । २. ASE यश्चमं° । ३. BOI ब्रह्म, RASB शिष्य° । ४. BOI °वर्जिताः । ५. CU °ने । ६. BOI °वर्जिता ।

त्रैधातुकस्थितां सर्वामङ्गनां सुरतविह्वलाम्[1] ।
कामयेद्[2] विधिभिर्भावैः समयः परमाद्भुतः ॥१७॥

अथ वज्रपाणिः सर्वतथागताधिपतिः विष्णुसमयं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ॥

यावन्तः सत्त्व[3]संभूताः त्रिवज्राभेद्यसंस्थिताः ।
मारयेद् ध्यानवज्रेण वज्रधातुमपि स्वयम् ॥१८॥

अथ वज्रपाणिः सर्वतथागताधिपतिः त्रिवज्रसमयं स्वकायवाक्चित्तेभ्यो निश्चारयामास ॥

कायवज्रो भवेद् ब्रह्मा वाग्वज्रस्तु महेश्वरः ।
चित्तवज्रधरो राजा सैव विष्णुर्महर्धिकः ॥१९॥

अथ वज्रपाणिः सर्वतथागताधिपतिः सर्वयक्षयक्षिणी समयं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ॥

असृक्पिशिताहारा नित्यं कामपराः स्त्रियः ।
आराधयेन्महावज्रसमयैरेभिर्दुर[4]ासदैः ॥२०॥

अथ वज्रपाणिः सर्वतथागताधिपतिः सर्वभुजगेन्द्रराज्ञीसमयं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ॥

पैशुन्यक्षीरि[5]ताहाराः कामगन्धपराश्च ताः ।
साधयेत्समयैरेभिरन्यथा क्लिश्यते ध्रुवम् ॥२१॥

अथ वज्रपाणिः सर्वतथागताधिपतिरसुरकन्यासमयं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ॥

क्रूरा मानभर[7]ाक्रान्ता गन्धपुष्पोपभोगजाः[8] ।
समयो वज्रपातालिः[9] दुर्दान्ता वज्र[10]भैरवाः ॥२२॥

अथ वज्रपाणिः सर्वतथागताधिपतिः राक्षसस्त्रीसमयं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ॥

---

१. BOI & CU त्रिवज्रसम्भवाम् । २ CU त्रि° । ३. ASB सर्वं° । ४. BOI & CU °काया° । ५. ASB °रतिद्रु° । ६. ASB क्षीरा° । ७. CU मारसमा°, BOI माररागवरा° । ८. CU °काः । ९. BOI °पाताले, CU योषितां । १०. ASB °श्राति° ।

कपालास्थिधूपतैलवसया प्रीणनं महत् ।
समयः सर्वभूतानां पवित्रो[1]ऽयं महार्थकृत् ॥२३॥

अथ वज्रपाणिः सर्वतथागताधिपतिः सर्ववज्रडाकिनीसमयं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ।

विण्मूत्ररुधिरं भक्षेत्[2] मद्यादींश्च पिबेत् सदा ।
वज्रडाकिनीयोगेन मारयेत् पदलक्षणैः ॥२४॥
स्वभावेनैव संभूता विचरन्ति त्रिधातुके ।
आचरेत्समयं कृत्स्नं सर्वसत्त्व[3]हितैषिणा ॥२५॥

सर्वत्रैधातुक[4]समयसमवसरणो नाम समाधिः ।

अथ वज्रपाणिः सर्वतथागताधिपतिः कायसिद्धिसमयवज्रं कायवाक्चित्तवज्रेभ्यो निश्चारयामास ॥

कायिकं त्रिविधं सर्वं कारयेद्वज्रसम्भवम् ।
बुद्धकार्यकरं नित्यं सत्त्वधातोः समन्ततः ॥२६॥

अथ वज्रपाणिः सर्वतथागताधिपतिर्वाक्सिद्धिसमयवज्रं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ॥

वाक्यकर्मकृतं[5] कृत्स्नं त्रैलोक्यामलमण्डलम् ।
वाक्सिद्धिपदरम्योऽयं समयो[6] दुरतिक्रमः ॥२७॥

अथ वज्रपाणिः सर्वतथागताधिपतिः चित्तसिद्धिवज्रसमयं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ॥

मनोवज्रमयं सर्वं भावयेद् दृढवज्रधृक् ।
एषो हि समयः प्रोक्तः त्रिवज्राभेद्यवज्रिणाम् ॥२८॥

इत्याह भगवान् समन्तभद्रो[7] वज्रसत्त्वः ।

अथ वज्रपाणिः सर्वतथागताधिपतिः सर्वमन्त्रवज्रसारसमयं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ॥

---

१. BOI & CU °वज्र° । २. CU भक्ष्यं । ३. ASB °सिद्धि° । ४. BOI & CU add वज्रं । ५. ASB & CU °पदं । ६. ASB °योऽपि, RASB °योऽयं । ७. ASB समन्त्रसुन्दरो ।

बुद्धांश्च बोधिसत्त्वांश्च प्रत्येकश्रावकांस्तथा[१] ।
कायवाक्चित्तसंयोगैर्वन्दयेन्[२] नाशमाप्नुयात् ॥२९॥

अथ वज्रपाणिः सर्वतथागताधिपतिः सर्वतथागतकायवाक्चित्तवज्रध्यानसमयं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ॥

वज्रसत्त्वस्य सर्वत्र कायवाक्चित्तमण्डले ।
ध्यानं त्रिवज्रयोगेन ध्यातव्यं मन्त्रजापिना ॥३०॥

[३]अथ वज्रपाणिः सर्वतथागताधिपतिः सर्वमन्त्रवज्रसाधनसमयसम्बरं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ॥

सत्त्वधातुं समासेन ध्यानवज्रेण चोदयेत् ।
त्रिवज्रवन्दनाग्राग्र्यः समयो वज्रसम्भवः ॥३१॥

अथ वज्रपाणिः सर्वतथागताधिपतिः सेर्वा[४]साधनोपसाधनमहासाधन[५]समयसम्बरं[६] स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ॥

खधातुं विण्मूत्रवज्रेण[७] परिपूर्णं विचिन्तयेत् ।
दद्यात् त्रियध्वबुद्धेभ्यः समयः परमशाश्वतः ॥३२॥

अथ वज्रपाणिः सर्वतथागताधिपतिः सर्ववज्रान्तर्धानसमयं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ॥

कामयेत्प्रतिदिनं वज्री[८] चतुःसन्ध्यं यथोत्तमम् ।
द्रव्यं चोप[९]हरेन्नित्यं समयो वज्रपूरकः ॥३३॥

अथ वज्रपाणिः सर्वतथागताधिपतिः खविद्याधरसमयं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ॥

कायवाक्चित्तवज्राणां मुकुटे ध्यानं विचिन्तयेत् ।
त्रिवज्रसमयैः सर्वैः क्रुद्धै[१०]र्जेतुं न शक्यते ॥३४॥

---

१. For this line BOI & CU read न बुद्धान् बोधिसत्त्वांश्च प्रत्येकजिनश्रावकान्। २. BOI & CU °दर्शं° । ३. CU omits from here to समयो वज्रसम्भवः below. ४. ASB सर्वं° । ५. CU omits 'महासाधन' । ६. BOI & CU °सम्भवं । ७. CU योगेन । ८. BOI & CU मन्त्री । ९. BOI वापि, CU चापि । १०. BOI & CU °रैः ।

अथ वज्रपाणिः सर्वतथागताधिपतिः सर्वमन्त्रधरादिकर्मिकसमयं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ॥

भंजने[1] कायवज्रस्य बहिर्वज्रधरस्य च ।
वज्रधर्मैः[2] सदा कार्या[3] सूत्रोद्धाटविधिक्रिया ॥३५॥

इत्याह भगवान् स्वभावशुद्धवज्रः ।

अथ वज्रपाणिः सर्वतथागताधिपतिः सर्ववज्रधरस्वकायवाक्चित्तहृदयवज्रसमतां विचिन्त्य तूष्णीमभूत् ॥

अथ खल्वनभिलाप्यानभिलाप्यबुद्धक्षेत्रसुमेरुपरमाणुरजःसमा बोधिसत्त्वा महासत्त्वाः सर्वतथागतान् प्रणिपत्यैवमाहुः । किमर्थं भगवान् सर्वतथागताधिपतिर्वज्रधरः सर्वतथागतबोधिसत्त्वपर्षन्मण्डलमध्ये तूष्णीम्भावेनाधिवासयति ।

अथ भगवान् सर्वतथागताधिपतिस्तान् सर्वबोधिसत्त्वानेवमाह । कायवाक्चित्तवज्रानुपलब्धिस्वभावाक्षरपदं कुलपुत्रा अयं सर्वतथागतकायवाक्चित्तवज्राधिपतिः निःस्वभावाक्षरपदं विचार्य तूष्णीं[4] व्यवस्थितः ॥

अस्य च कुलपुत्राः सर्वतथागताधिपतेः चिन्तया एतदभूत् ॥

कायाक्षरमनुत्पन्नं वाक्चित्तपदलक्षणम् ।
खवज्रकल्पनाभूतं मिथ्यासंग्रहसंग्रहम् ॥ इति ॥३६॥

अथ मञ्जुश्रीप्रमुखा महाबोधिसत्त्वाः तान्सर्वतथागतानेवमाहुः । मा भगवन्तः सर्वतथागता वाग्वज्रपदं मिथ्यासमुदयेन कल्पयथ । तत्कस्माद्धेतोः । सर्वतथागतवज्रधातुष्वेवं[5]चरितगतानुगतिकोऽयं सर्वतथागतकायवाक्चित्तवज्राधिपतिः । तत्कस्माद्धेतोः । सन्ति ब्रह्माद्या महाबोधिसत्त्वा महाभिज्ञाज्ञानसंप्राप्ताः सर्वधर्मलक्षणस्वभावमजानन्त एवं विकल्पयन्ति ॥ किमर्थं सर्वतथागतमहावज्रात्मा सर्वतथागतधर्मवज्रतत्त्वमनभिज्ञाय[6] गुह्याक्षरं निर्दिशतीति ।

अथ भगवन्तः सर्वतथागतास्तान् बोधिसत्त्वानेवमाहुः । तिष्ठन्तु तावत् भवन्तो महाबोधिसत्त्वा वयमपि सर्वतथागतकायवाक्चित्तवज्रगुह्याक्षरं प्राप्य कायवाक्चित्तबोधिं न जानीमहे । तत्कस्माद्धेतोः । निःस्वभावाक्षरसम्भूत अनुत्पादवज्राभिसंबोधिर्यावन्तः

---

१. ASB भो° । २. BOI धर्मवज्रं । ३. BOI कार्यं । ४. BOI तुष्णीभावेन । ५. BOI स्वभावे, CU स्वभाव° । ६. BOI °मचि° ।

कुलपुत्राः सत्त्वाः सत्त्वसंग्रहेण संगृहीताः सर्वे ते बोधिप्रतिष्ठिताः बुद्धवज्राः[1]। तत्कस्माद्धेतोः। कायवाक्चित्तवज्रज्ञानप्राप्ता बतामी सत्त्वास्त्रिकायवज्रधर्मतामुपादाय[2]।

अथ वज्रपाणिः सर्वतथागतकायवाक्चित्तवज्राधिपतिस्तान् सर्वतथागतंबोधिसत्त्वांश्चैवमाह ॥

स्वभावशुद्धनैरात्म्ये धर्मधातुनिरालये।
कल्पना वज्रसम्भूता गीयते न च गीयते ॥३७॥

अथ भगवन्तः सर्वतथागता भगवन्तं महावज्रपाणिं सर्वतथागत[3]स्वामिनं नमस्कृत्यैवमाहुः। कुत इमानि भगवन् सर्वतथागतकायवाक्चित्तवज्रसिद्धीनि समवसरन्ति? क्व वा प्रतिष्ठितानि?

सर्वतथागताधिपतिर्वज्रधरः प्राह। स्वकायवाक्चित्तवज्र[4]समतासन्तानवज्रप्रतिष्ठितानि भगवन्तः सर्वतथागताः सर्वसिद्धीनि सर्ववज्रज्ञानानि सर्वं यावत् त्रैधातुकमिति।

सर्वतथागताः प्रोचुः। सर्वतथागतकायवाक्चित्तवज्र[5]सिद्धीनि सर्वं त्रैधातुकं च भगवन् कुत्र स्थितम्? सर्वतथागत[6]ज्ञानाधिपतिः प्राह। आकाशधातुप्रतिष्ठितानि भगवन्तः सर्वतथागताः सर्वतथागतकायवाक्चित्तवज्रसिद्धीनि सर्वं त्रैधातुकं च। सर्वतथागताः प्रोचुः। आकाशं भगवन्[7] कुत्र स्थितम्? वज्रधरः प्रोचुः (प्रोवाच)। न क्वचित्[8]।

अथ ते सर्वतथागता बोधिसत्त्वा आश्चर्यप्राप्ता अद्भुतप्राप्ता इमं धर्मघोषमकार्षुः।

अहो वज्र अहो वज्र अहो वज्रस्य देशना।
यत्र न कायवाक्चित्तं तत्र रूपं विभाव्यते ॥३८॥
अथ वज्रधरः शास्ता सर्वबुद्धनमस्कृतः।
त्रिवज्राग्र्यो महाग्राग्र्यस्त्रिवज्रः परमेश्वरः ॥३९॥
भाषते सर्वसिद्धीनां विद्यापुरुषभावनाम्।
स्ववज्रधातुमध्यस्थं भावयेद्बुद्धमण्डलम् ॥४०॥
कायवज्रं प्रभावित्वा वज्रं मूर्ध्नि प्रभावयेत्।
त्रिमुखं त्रिकायसम्भूतं विस्फुरन्तं विचिन्तयेत् ॥४१॥
वज्रचक्रधरं ध्यात्वा शीघ्रं बोधिमवाप्नुयात्।

---

१. BOI °क्रुद्ध°। २. BOI °वृचना°, CU °वरणा°। ३. RASB सर्वत्र। ४. BOI वज्राधिपति। ५. BOI & CU omit °वज्र°। ६. ASB adds वज्र। ७. ASB & RASB omit. ८. ASB omits this sentence.

कुलभेदेन[1] सर्वेषामिदं गुह्यं विचिन्तयेत् ।

अन्यथा भावना तेषां सिद्धिर्भवति नोत्तमा[2] ॥४२॥

इत्याह च भगवान् विद्यापुरुषवज्रगुह्यः ॥

धातुं[3] भूतां महाराज्ञीं प्रीणयन्तीं विचिन्तयेत् ।

एवं तुष्यन्ति ते वृषभाः वज्रकायत्रिलक्षणाः[4] ॥४३॥

यश्चेदं भावयेत्कश्चिद्बोधिसत्त्वो महायशाः ।

त्रिकायसिद्धिमाप्नोति सप्ताहेन महाद्युतिः ॥४४॥

अथ भगवान् वज्रपाणिः सर्वतथागताधिपतिः पुनरपि कायवाक्चित्तवज्रसमुच्चय-गुह्यरहस्यं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ।

कायवाक्चित्तसमयं महामुद्रार्थकल्पनाम् ।

भावयेद्विधिवत्सर्वान् क्षणाद्बुद्धत्वमाप्नुयात् ॥४५॥

अथ वज्रपाणिः सर्वतथागताधिपतिः पुनरपि सर्वसाधककायवाक्चित्तवज्रेभ्यो निश्चारयामास ॥

हस्तमुद्रां न बध्नीयात् यदीच्छेत्सिद्धि[5]मुत्तमाम् ।

समयः सर्वमन्त्राणां नातिक्रम्यो जिनै[6]रपि ॥४६॥

अथ वज्रपाणिः सर्वतथागताधिपतिः पुनरपि सर्वबुद्धसमयं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ॥

विण्मूत्रशुक्ररक्तानां जुगुप्सां नैव कारयेत् ।

भक्षयेद्विधिना नित्यमिदं गुह्यं त्रिवज्र[7]जम् ॥४७॥

अथ वज्रपाणिः सर्वतथागताधिपतिः पुनरति वाग्वज्रसमयं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ॥

त्रैधातुकपथे रम्ये यावन्त्यो योषितः स्मृताः ।

कामयेद्विधिवत् सर्वा वाग्वज्रैर्न जुगुप्स्यते ॥४८॥

अथ वज्रपाणिः सर्वतथागताधिपतिः पुनरपि चित्तवज्रसमयं स्वकायवाक्चित्त-वज्रेभ्यो निश्चारयामास ॥

---

१. BOI °धर्मेण । २. MSS न चो° । ३. ASB & RASB वान्त° । ४. ASB त्रिरक्षिताः, BOI & CU त्रिलक्षिताः । ५. BOI & CU °बोधि° । ६. BOI & CU बुधैः । ७. BOI °गुह्य° ।

यावन्तः सर्वसमयास्त्रिवज्रकाय[1]संस्थिताताः ।
प्रीणयन्ति[2] वज्रसमयैः चित्तवज्रं न जुगुप्सयेत् ॥४९॥

इत्याह भगवान् त्रिवज्रसमयः[3]। अथ वज्रपाणिः सर्वतथागताधिपतिः पुनरपि सर्वतथागतगुह्यवज्रं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ।

पञ्चस्कन्धाः समासेन पञ्चबुद्धाः प्रकीर्तिताः ।
वज्र-आयतनान्येव बोधिसत्त्वाग्र्यमण्डलमिति ॥५०॥

अथ वज्रपाणिः सर्वतथागताधिपतिः पुनरपि त्रैधातुक समुच्चय[4]वज्रं[5] स्वकायवाक्-चित्तवज्रेभ्यो निश्चारयामास ।

पृथिवी लोचना ख्याता अब्धातुर्मामकी स्मृता ।
पाण्डराख्या भवेत्तेजो[6] वायुस्तारा प्रकीर्तिता ॥५१॥
खवज्रधातुसमयः सैव वज्रधरः स्मृतः ।

इत्याह भगवान् सर्वतथागतभुवनेश्वरो महावज्रसत्त्वः । अथ भगवान् सर्वतथा-गतकायवाक्चित्तवज्रस्तथागतः सर्वतथागतसमताविहारं नाम समाधिं समापन्नः । समापद्य च सर्वतथागतपर्षन्मण्डलमवलोक्य तूष्णीमभूत् ।

अथ खलु मैत्रेयो बोधिसत्त्वो महासत्त्वः सर्वतथागतान् प्रणिपत्यैवमाह । सर्वतथा-गतकायवाक्चित्तवज्रगुह्यसमाजाभिषिक्तो[7] भगवान् वज्राचार्यः सर्वतथागतैः सर्वबोधि-सत्त्वैश्च कथं द्रष्टव्यः ? सर्वतथागताः प्राहुः । बोधिचित्तो वज्र इव कुलपुत्र सर्वतथागतैः सर्वबोधिसत्त्वैश्च द्रष्टव्यः । तत्कस्माद्धेतोः ? बोधिचित्तश्चाचार्यश्चाद्वयमेतदद्वैधीकारम् । यावत्[8] कुलपुत्र संक्षेपेण कथयामः । यावन्तो दशदिग्लोकधातुषु बुद्धाश्च बोधिसत्त्वाश्च तिष्ठन्ति म्रियन्ति यापयन्ति च, सर्वे ते त्रिष्कालमागत्य[10] तमाचार्यं[9] सर्वतथागतपूजाभिः संपूज्य स्वस्वबुद्धक्षेत्रं पुनरपि प्रक्रामन्ति, एवं च वाग्वज्राक्षरपदं निश्चारयन्ति । पितास्माकं सर्वतथागतानां मातास्माकं[11] सर्वतथागतानाम् । तद्यथापि नाम कुलपुत्र यावन्तो बुद्धा[12] भगवन्तो[12] दशसु दिक्षु विहरन्ति तेषां च बुद्धानां भगवतां यावत् कायवाक्चित्तवज्रजः

१. BOI & CU °ज्ञान° । २. ASB °न्ते । ३. BOI adds वज्रः । ४. CU° समय° । ५. BOI & CU चक्रं । ६. ASB, BOI & RASB तेजोधातुस्तु पाण्डराख्याता । ७. ASB adds रहस्य° । ८. BOI °भिज्ञो । ९. BOI & CU एवं । १०. BOI °मालव्य । ११. CU यावच्छास्तास्माकं । १२. ASB & RASB omit.

पुण्यस्कन्धः स च पुण्यस्कन्ध आचार्यस्यैव[1] रोमकूपाग्रविवरे विशिष्यते। तत्कस्य हेतोः? बोधिचित्तं कुलपुत्र सर्वबुद्धज्ञानानां[2] सारभूतमुत्पत्तिभूतं यावत् सर्वज्ञज्ञानाकरमिति।

अथ खलु मैत्रेयो बोधिसत्त्वो महासत्त्वो भीतः सन्त्रस्त[3]मानसस्तूष्णीमभूत्।

अथ खलु अक्षोभ्यस्तथागतो रत्नकेतुस्तथागतोऽमितायुस्तथागतोऽमोघसिद्धिस्तथागतो वैरोचनस्तथागतः सर्वधर्म[4]सिद्धिसमयालम्बनवज्रं नाम समाधिं समापद्यैतान् सर्वबोधिसत्त्वानामन्त्रयते स्म। शृण्वन्तु भगवन्तः सर्वबोधिसत्त्वाः येऽपि[5] ते दशसु दिक्षु बुद्धा भगवन्तस्त्र्याध्ववज्रज्ञानसंभूतास्तेऽपि सर्वे[6] गुह्यसमाजाभिषिक्तमाचार्यमागत्य पूजयन्ति नमस्कुर्वन्ति च। तत्कस्माद्धेतोः? शास्ता सर्वबुद्धबोधिसत्त्वानां सर्वतथागतानां च स एव भगवान् महावज्रधरः सर्वबुद्धज्ञानाधिपतिरिति। अथ[7] ते सर्वे[8] महाबोधिसत्त्वाः तान् सर्वतथागतानेवमाहुः। सर्वतथागतकायवाक्चित्तसिद्धीनि भगवन्तः कुत्र स्थितानि क्व वा संभूतानि? सर्वतथागताः प्राहुः। त्रिकायगुह्यं सर्वतथागतकाय[9]वाक्चित्तं वज्राचार्यस्य कायवाक्चित्तवज्रे स्थितम्। महाबोधिसत्त्वा आहुः। कायवाक्चित्तगुह्यवज्रं कुत्र स्थितम्? सर्वतथागताः प्राहुः। आकाशे स्थितम्। महाबोधिसत्त्वाः प्राहुः। आकाशं कुत्र स्थितम्? सर्वतथागताः प्राहुः। न क्वचित्। अथ ते महाबोधिसत्त्वा आश्चर्यप्राप्ता अद्भुतप्राप्ताः तूष्णींस्थिता अभूवन्।

अथ भगवान् वज्रपाणिस्तथागतः सर्वतथागतकायवाक्चित्त[10]गुह्यवज्रसमाधेर्व्युत्थाय सर्वतथागतान् सर्वबोधिसत्त्वांश्चामन्त्रयते स्म। शृण्वन्तु भगवन्तः सर्वतथागताः सर्वबोधिसत्त्वाश्च सर्वतथागत[11]बोधिसत्त्वसंभवज्रं नाम महामण्डलम्।

अथ खलु सर्वतथागता बोधिसत्त्वाश्च कृताञ्जलिपुटा भगवन्तं वज्रधरमेवमाहुः। देशयतु भगवान् देशयतु सुगतो महामण्डलमिति।

खधातुमध्यगतं चिन्तेच्चतुरस्रं सुशोभनम्।
बुद्धमण्डलयोगेन ध्यानवज्रं प्रचोदयेत् ॥५२॥
वज्रमण्डलध्यानेन आसनं सर्वचक्रि[12]णाम्।
पूजां तेनैव विधिना कुर्वीत मतिमान् सदा ॥५३॥

---

१. ASB °क°। २. ASB °बुद्धानां। ३. ASB सन्तप्त°। ४. BOI & CU सर्ववज्रधरः। ५. ASB पथि। ६. BOI & CU omit. ७. BOI omits the whole paragraph. ८. ASB omits. ९. CU त्रिगुह्यकाय°। १०. ASB & RASB add वज्रधर। ११. ASB °तो। १२. BOI & CU वज्रि°।

आचार्यं हृदये ध्यात्वा अभिषेकं समारभेत् ।
खधातुं सर्वबुद्धैस्तु परिपूर्णं विचिन्तयेत् ॥५४॥
पातयेद्विधिवत् सर्वान् अभिषेकपदैस्त्रिभिः ।
अनेन बोधिमाप्नोति सर्वसत्त्वहितैषिणीम् ॥
सिद्ध्यति कायवाक्चित्तं सर्वसिद्धिमहाद्भुतम् ॥५५॥
॥ सर्वबुद्धबोधिसत्त्वसमयचक्रं नाम ध्यानमण्डलम् ॥

अथ खलु वज्रपाणिः सर्वतथागताधिपतिः पुनरपि सर्वतथागतवज्रयोगं[1] नाम कायवाक्चित्तगुह्यं[2] स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ।

॥ हूँ ह्रीः[3] खँ ॥

खधातुमध्यगतं चिन्तेदस्थिमांसादिमण्डलम् ।
त्रिकायवाक्चित्तहृदये वज्रसत्त्वं वि[4]भावयेत् ॥५६॥
क्रूरं विकृतं संक्रुद्धं नीलोत्पलसमप्रभम् ।
चतुर्भुजं विधानेन कपाल[5]हस्तं विभावयेत् ॥५७॥
पञ्चरश्मिप्रभोद्योतां स्वजिह्वां भावयेद्व्रती ।
ध्यानमन्त्रप्रयोगेण रुधिराकर्षणमुत्तमम् ॥५८॥
त्रिशूलं वज्रसमयं कीलकं दारुणोत्तमम्[6] ।
पीड़येद्वज्रयोगेन बुद्धकायँमपि स्वयम् ॥इति॥५९॥

अथ वज्रपाणिः सर्वतथागताधिपतिः पुनरपि वज्राहारसमयकृत्यार्थं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ।

अन्नं वा अथवा पानं यत्किञ्चिद्भक्षयेद्व्रती ।
विण्मूत्रमांसयोगेन विधिवत्परिकल्पयेत् ॥६०॥

अथ वज्रपाणिः सर्वतथागताधिपतिः पुनरपि सर्वतथागतकायवाक्चित्तवज्रपूजाग्र्यं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ।

पञ्चोपहारपूजाग्रैः पूजनं च प्रकल्पयेत् ।
एषो हि सर्ववज्राणां समयो दुरतिक्रमः ॥६१॥

---

१. ASB & RASB योगवज्रं । २. BOI & CU समयवज्रं । ३. RASB ह्रीँ । ४. BOI & CU °सत्त्वस्य । ५. ASB कर° । ६. BOI & CU °मे । ७. BOI °यं । ८. BOI & CU मन्त्रा° ।

अथ वज्रपाणिः सर्वतथागताधिपतिः पुनरपि सर्वतथागतकायवाक्चित्त[1]पूजारहस्यं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ।

द्वयेन्द्रियप्रयोगेण स्वशुक्रादिपरिग्रहैः ।
पूजयेद्विधिवत्सर्वान् बुद्धबोधिमवाप्नुयात् ॥६२॥

अथ वज्रपाणिः सर्वतथागताधिपतिः पुनरपि सर्वतथागतकायवाक्चित्तसम्बरं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयमास ।

सत्त्वधातोरनन्तस्य मातां[2] समयधारिणीम्[3] ।
काये त्रिवज्रसमयैः[4] सम्बरोऽयं महाद्भुतः ॥६३॥

अथ वज्रपाणिः सर्वतथागताधिपतिः पुनरपि सर्वसाधकसम्बरवज्रं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ।

[5]कायवाक्चित्तसंभोगं त्रिगुह्यालयवज्रजम् ।
साधयामि अहं भद्रं संशयो नात्र सर्वथा ॥६४॥

अथ वज्रपाणिः सर्वतथागताधिपतिः पुनरपि सर्वसाधकवज्रसत्त्वसम्बरं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ।

वितस्तिमात्रमतिक्रम्य मूर्ध्नि मण्डलकल्पना ।
ओंकारं मध्यगतं ध्यात्वा पञ्चामृतनिपातनम् ॥६५॥
अनेन वज्रयोगेन तेजस्वी भवति क्षणात् ।
कायवाक्चित्तसौस्थित्यं भवति नात्र संशयः ॥६६॥

अथ वज्रपाणिः सर्वतथागताधिपतिः पुनरपि सर्वमण्डल[6]धरकायवाक्चित्तगुह्यं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ।

चैत्यकर्म न कुर्वीत न च पुस्तकवाचनम् ।
मण्डलं नैव कुर्वीत न त्रिवज्राग्रवन्दनम् ॥६७॥

अथ वज्रपाणिः सर्वतथागताधिपतिः सर्वविषपरिहार[7]स्तम्भनाकर्षणगुह्यं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ।

---

१. CU adds °वज्र° । २. ASB मात्रां । ३. CU °र° । ४. BOI & CU कामयेत् त्रिवज्रसमयैः । ५ BOI omits from here to निश्चारयामास below. ६. CU °मन्त्र° । ७. BOI and CU °विषापहार° ।

॥ श्रुं ॥

चक्रमध्यगतं स्थाप्य सितांशुज्वालमालिनम् ।
पीतांशुरश्मिगहनं भावयेत् पीतसन्निभम् ।
त्रिवज्ररश्मिसमयैर्बीजो[1]ऽयं गुह्यसम्भवः ॥६८॥

अथ वज्रपाणिः सर्वतथागताधिपतिः कायवाक्चित्तरक्षाचक्रमन्त्रं वज्रसंयुक्तं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ।

उँ हूलू हूलू तिष्ठ तिष्ठ बंध बंध हन हन दह दह अमृते हूँ फट् स्वाहा ।

भूर्जपत्रादिषु चक्रं कर्मवज्रप्रतिष्ठितम् ।
हूं[2]कारमध्यगं कृत्वा[3] नाममध्ये समालिखेत् ॥६९॥
मन्त्राक्षरपदैः सम्यक् मण्डितं स्थापयेत् सदा ।
एषो हि सर्वमन्त्राणां त्रिगुह्यालयसम्भवः ॥७०॥

अथ वज्रपाणिः सर्वतथागताधिपतिः वज्राञ्जनपदं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ।

चतुष्पथैकवृक्षे च मातृस्थाने शिवालये ।
वज्राञ्जनपदं तत्र कपाले पातयेत्सदा ॥७१॥

महातैलै[4]रुधिरं विष्ठं पद्मसूत्रमर्कतूले[5]न वर्तिं कृत्वा कृष्णचतुर्दश्यामर्द्धरात्रौ वज्राञ्जनं पातयेद्बुधः तत्रैवाष्टशताभिमन्त्रितं कृत्वा । त्रिविधा सिद्धिर्भवति इत्याह भगवान् समन्तभद्रः ।

अथ भगवन्तः सर्वतथागता वज्रपाणिं सर्वतथागताधिपतिमेवमाहुः । कतिभिर्भगवन् गुह्याक्षरैः समन्वागतास्ते बोधिसत्त्वा महासत्त्वा य इदं सर्वतथागतचर्यावज्रं सर्वतथागतगुह्य[6]समयं श्रद्धास्यन्ति भावयिष्यन्ति च ।

अ[7]थ वज्रपाणिः सर्वतथागताधिपतिः तान् सर्वतथागतानेवमाह । त्रिगुह्याक्षरैर्भगवन्तः सर्वतथागताः समन्वागतास्ते बोधिसत्त्वा महासत्त्वा य इदं सर्वतथागतबोधिचर्यावज्रं

---

१. CU विजयं । २. ASB & RASB हुं ; °CU हूँ° । ३. BOI ध्यात्वा । ४. CU भैरवं । ५. ASB °नाले° । ६. BOI & CU omit. ७ CU omits from here to भावयिष्यन्ति च ।

श्रद्धास्यन्ति भावयिष्यन्ति च । सर्वतथागताः प्राहुः । कतमैस्त्रिभिः ? वज्रधरः प्राह । यदुत सर्वतथागतकायवज्रेण, सर्वतथागतवाग्वज्रेण, सर्वतथागतचित्तवज्रेण, एभिस्त्रिभिः ।

अथ ते सर्वतथागता भगवतो वज्रपाणेः पादयोर्निपत्य तूष्णींस्थिता अभूवन् ।

अथ वज्रपाणिः सर्वतथागताधिपतिः तान् सर्वतथागतान् बोधिसत्त्वांश्चामन्त्रयते स्म । भूतपूर्वं भगवन्तः सर्वतथागता अनभिलाप्यानभिलाप्यबुद्धक्षेत्रसुमेरुपरमाणुरजःसमाः कल्पाः क्षीणा यावद् भगवतो दीपङ्करस्य तथागतस्यार्हतः सम्यक्सम्बुद्धस्यातिक्रान्तस्य काश्यपस्यापि महामुनेरभिसम्बुद्धस्य न भाषितम् । तत्कस्माद्धेतोः ? अभव्या[1] भगवन्तः सत्त्वा अस्य महागुह्यपदार्थस्य तेन[2] कालेन तेन[3] समयेन मया न भाषितम् । अपि तु भगवन्तः सर्वतथागता अस्मिन् गुह्यसमाजे बुद्धबोधिं क्षणलवमुहूर्तेनैव निष्पादयन्ति । यदनेकैर्गङ्गानदीवालुकासमैः[4] कल्पैः घटयन्तो व्यायच्छन्तो बोधिसत्त्वा बोधिं न प्राप्नुवन्ति । तदिहैव जन्मनि गुह्यसमाजाभिरतो बोधिसत्त्वः सर्वतथागतानां बुद्ध इति संख्यां गच्छति ।

अथ ते महाबोधिसत्त्वा इदं वाग्वज्राक्षरपदं श्रुत्वा प्ररोदयामासुः । अथ ते सर्वतथागतास्तान्बोधिसत्त्वानेवमाहुः । मा भगवन्तः महाबोधिसत्त्वाः प्ररोदयत मा च त्रिदुःखं समुत्पादयत । अथ ते महाबोधिसत्त्वास्तान् सर्वतथागतानेवमाहुः । कथं ते भगवन्तः सर्वतथागता न प्ररोदामहे ? कथं न दुःखमुत्पादयामहे ? तत्कस्मात् हेतोः ? अभव्या भगवन्तः त्रिगुह्याक्षरम् । अभव्या भगवन्तोऽन्तशो नाम श्रवणेनापि । सर्वतथागताः प्राहुः । सामान्याक्षरपदं कुलपुत्रा यथा भवद्भिर्न ज्ञातं न श्रुतं तथास्माभिरपि सर्वतथागतैः सर्वबुद्धबोधिसत्त्वैश्च कुलपुत्रास्ते गुह्याक्षरा न संज्ञाता नाभिसम्बुद्धाश्च । तत्कस्माद्धेतोः ? त्रिगुह्याक्षरविशुद्धत्वात् ।

अथ ते सर्वे बोधिसत्त्वाः तूष्णीं व्यवस्थिता[5] अभूवन् । अथ भगवन्तः सर्वतथागताः सर्वतथागतकायवाक्चित्तवज्रयोषिद्भगेषु विजहार ।

अथ सा सर्वतथागतचित्तदयिता मामकी भगवन्तं सर्वतथागताधिपतिं महावज्रधरं एभिर्वज्रधरकामरतिपूजाग्राक्षरपदैः प्रीत्या संस्तूयामास[6] ।

---

१. BOI असेव्या । २. ASB adds मया । ३. ASB omits. ४. BOI & CU °कोपमैः । ५. CU °भूता । ६. CU स्तुव°, स्तनु° ।

“त्वं वज्रचित्त भुवनेश्वर सत्त्ववत्सलो
त्रायाहि मां रतिमनोज्ञ महार्थकामैः ॥
कामाहि मां जनक सत्त्वमहाग्रबन्धो
यदीच्छसे जीवितं मञ्जुनाथ ॥७२॥”

अथ सा बुद्धलोचना सर्वतथागतकायदयिता भगवन्तं सर्वतथागताधिपतिं महावज्रधरमेभिः सर्ववज्रकामरतिपूजाग्राक्षरपदैः सुखसौमनस्यप्रीत्या संस्तूयामास ।

“त्वं वज्रकाय बहुसत्त्वप्रियाङ्कचक्र
बुद्धार्थबोधिपरमार्थहितानुदर्शी[1] ।
रागेण रागसमयं[2] मम कामयस्व
यदीच्छसे जीवितं मञ्जुनाथ ॥७३॥”

अथ सा लोकेश्वरदयिता कायावस्थितनेत्री[3] भगवन्तं सर्वतथागताधिपतिं महावज्रधरं कामोपभोगसमयैः संस्तूयामास ॥

“त्वं वज्रवाच सकलस्य हितानुकम्पी
लोकार्थकार्यकरणे सद संप्रवृत्तः ।
कामाहि मां सुरतचर्य समन्तभद्र
यदीच्छसे जीवितं मञ्जुनाथ ॥७४॥”

अथ सा सर्वतथागतकायवाक्चित्तसमयवज्रदयिता भगवन्तं सर्वतथागताधिपतिं महावज्रधरमनया सर्वतथागतसुखसौमनस्यप्रीत्या संस्तूयामास ।

“त्वं वज्रकार्य[4] समयाग्र महाहितार्थ
संबुद्धवंशतिलकः समतानुकम्पी[5] ।
कामाहि मां गुणनिधिं बहुरत्नभूतं
यदीच्छसे जीवितं मञ्जुनाथ ॥७५॥”

अथ भगवान् वज्रपाणिस्तथागतः सर्वकामोपभोगवज्रश्रियं नाम समाधिं समापन्नस्तां सर्वतथागतदयितां समयचक्रेण कामयन् तूष्णीमभूत् ।

---

१. ASB °दर्भी । २. ASB & CU °यां, RASB °ग्रै° । ३. BOI & CU कायवाक्चित्तवज्रनेत्री । ४. BOI & CU °म । ५. CU सुगत° ।

अथायं सर्वाकाशधातुः सर्वतथागतकायवाक्चित्तवज्रसमय[1]शुक्रेण परिपूर्णो वज्रोदक-परिपूर्णकुम्भ[2]इव संस्थितोऽभूत् ।

अथास्मिन्वज्राकाशधातौ ये सत्त्वांस्त्रिकायसमयसम्भूतास्त्रिवज्रश्रिया संस्पृष्टाः[3] सर्वे ते[4] तथागता अर्हन्तः सम्यक्सम्बुद्धास्त्रिवज्रज्ञानिनोऽभूवन् । ततः प्रभृति सर्वसत्त्वाः समन्तभद्र [5]समन्तभद्र इति सर्वतथागतकायवाक्चित्तवज्रेणाभिषिक्ता अभूवन् ।

अथ वज्रपाणिस्तथागत[6]स्तान्सर्वत[7]थागतानेवमाह । दृष्टा भगवन्तः सर्वतथागताः सर्वबुद्धधर्मसमता । अथ ते सर्व[8]तथागता वज्रपाणिं सर्वतथागताधिपतिमेवमाहुः । दृष्टा भगवन् दृष्टा सुगतवज्रज्ञानसमता वज्रज्ञानचर्येति । अथ भगवन्तः सर्वतथागताः सर्व-तथागतयोषिद्भगेष्वभिनिष्क्रम्य भगवन्तं महावज्रपाणिं सर्वतथागताधिपतिं तथागतमेव-माहुः । आश्चर्यं भगवन्नाश्चर्यं सुगत यत्र हि नाम रागाक्षरपदैः बुद्धबोधिरनुगन्तव्येति ।

अथ वज्रपाणिः सर्वतथागताधिपतिस्तान्सर्वतथागतानेवमाह । मा भगवन्तः सर्वतथागता एवं वदथ । तत्कस्माद्धेतोः ? खवज्रसमयतुल्यत्वात् सर्वधर्माणां न रूप-स्कन्धो न वेदनास्कन्धो न संज्ञास्कन्धो न संस्कारस्कन्धो न विज्ञानस्कन्धो न धातुर्नायतनं न रागो न द्वेषो न मोहो न धर्मो नाधर्म इति ।

अथ ते सर्वतथागतास्तूष्णीमभूवन् ।

अथ भगवान्वज्रपाणिः तान्सर्वतथागतान्बोधिसत्त्वांश्चामन्त्रयते स्म । आलोचयन्तु भगवन्तः सर्वतथागताः सर्वलोकधातुष्विदं सर्वतथागतकायवाक्चित्तवज्रगुह्यम् । तत्कस्मा-द्धेतोः ? भव्या बतामी दशदिक्संस्थिता बोधिसत्त्वा महासत्त्वा अस्य धर्मपर्यायस्य ।

अथ वज्रपाणिः सर्वतथागताधिपतिः वज्रधर्म[9]मामन्त्रयते स्म । उद्गृहाण कुलपुत्र इदं सर्वतथागतसमयतत्त्वं त्वं हि सर्वतथागतैर्धर्मेश्वर वज्रराज इत्यभिषिक्तः ।

अथ वज्रधर्मो बोधिसत्त्वो महासत्त्वस्तथा[10]स्त्विति कृत्वा तूष्णीमभूत् ।

अथ ते भगवन्तः सर्वतथागताः त्रिवज्रतत्त्वाक्षरेषु कायवाक्चित्तं प्रवेशयामासुः । अथ वैरोचनस्तथागतः सर्वत्रैधातुककायवज्रेषु विहरन् सर्वतथागतकायसमतामध्यालम्ब्य

---

१. ASB च° । २. RASB कुम्भेष्वव° । ३. BOI °ष्यस्ताः । ४. CU °अथ ते सर्वे° । ५. BOI adds इति । ६. BOI & CU° स्सर्वतथागताधिपति° । ७. CU omits from here to तथागतमेवमाहुः below. ८. BOI adds सर्वतथागत before. ९. BOI & CU °पाणि° । १०. ASB एवम° ।

तूष्णीमभूत्। अथ वाग्वज्रः तथागतः सर्वत्रैधातुकवाग्वज्रेषु विहरन् सर्वतथागतवाक्[1] समतामध्यालम्ब्य तूष्णीमभूत्। अथ वज्रपाणिस्तथागतः सर्वत्रैधातुकचित्तवज्रेषु विहरन् सर्वतथागतचित्तसमताम[2]ध्यालम्ब्य तूष्णीमभूत्।

इदमवोचत् भगवान्।

इति सर्वतथागतकायवाक्चित्तगुह्यरहस्यातिरहस्ये श्रीगुह्यसमाजे महागुह्यतन्त्रराजे सर्वतथागतसमयसम्बरवज्राधिष्ठानपटलः सप्तदशोऽध्यायः।

१. ASB वाग्वज्र°। २. CU °दयिता°।

# अष्टादशः पटलः

अथ खलु मैत्रेयप्रभृतयो महाबोधिसत्त्वाः सर्वतथागताभिषेककायवाक्चित्तगुह्यनिर्देशं सर्वभवेन यथावद् यथासमयं दृष्ट्वा श्रुत्वा चाधिगम्य तान् सर्वतथागतान् दृष्टधार्मिकानेवमाहुः ।

अहो समन्तभद्रस्य कायवाक्चित्तनिर्णयः ।
विहरन्ति त्रिवज्रेण त्रिवज्रेषु समन्ततः ॥१॥

सर्वसत्त्वाः समुत्पन्नास्त्र्यध्व[1]वज्रस्वभावतः ।
बोधिवज्रपदं प्राप्ता बुद्धवज्रमहर्धिकाः ॥२॥

अहो सुविस्मयमिदमहो शान्तमतीन्द्रियम् ।
अहो परमनिर्वाणमहो संसारसन्ततिः ॥३॥

ततस्ते सर्वतथागतास्तान् बोधिसत्त्वान् महासत्त्वानेवमाहुः । एवमेव[2]बोधिसत्त्वा एवमेव[3] महास[4]त्त्वा इति ।

अथ ते सर्वे बोधिसत्त्वा महासत्त्वाः पुनः समाजमागम्य तान्सर्वतथागतान् गुह्येतरपूजाभिः संपूज्य प्रणिपत्यैककण्ठेनैवं[5]माहुः ।

अहो सुदुर्लभमिदमुपायं बोधिसाधनम् ।
तन्त्रं गुह्यसमाजाख्यं तन्त्राणामुत्तरोत्तरम् ॥४॥

अध्येषयामस्त्वां नाथ यदुक्तं भूतवादिना ।
तद्गूढार्थ[6]बोधनार्थाय सत्त्वानां हितकाम्यया ॥५॥

अथ ते सर्वतथागतास्तान् बोधिसत्त्वानेवमाहुः ।

साधु साधु महासत्त्वाः साधु साधु गुणाकराः ।
यत्सुगुढपदं तन्त्रे[7] तत्सर्वं[8] पृच्छतेच्छया ॥६॥

---

१. ASB अथ । २. ASB & RASB महाबो° । ३. CU omits. ४. ASB & RASB बोधि° । ५. BOI कण्ठैव । ६. BOI & CU °ढा° । ७. BOI °न्त्रं ।

अथ ते—

सर्वे महाबोधिसत्त्वाः प्रहर्षो[1]त्फुल्ललोचनाः ।
पृच्छन्तीह स्वसन्देहान् प्रणिपत्य मुहुर्मुहुः ॥७॥
गुह्येत्यत्र[2] किमुच्येत समाजेति किमुच्यते ।
कीदृशस्तत्र[3] सम्बन्धः योगेत्यत्र किमुच्यते ॥८॥
तत्त्वं कतिविधं प्रोक्तं गुह्यं कतिविधं तथा ।
रहस्येति किमुच्येत परमं कतिविधं भवेत् ॥९॥
बोधिचित्तेति किं ज्ञेयं विद्यापुरुषेति किं तथा ।
वज्रधृगिति किं ज्ञेयं जिनजिगिति किं तथा ॥१०॥
रत्नधृगिति किं तत्र आरोलिगिति किं तथा ।
प्रज्ञाधृगिति किं ज्ञेयं कुलमित्यत्र किं तथा ॥११॥
मोह इति किमुच्येत द्वेषेत्यत्र किमुच्यते ।
राग इति किमुच्येत वज्रमत्र किमुच्यते ॥१२॥
रतीत्यत्र किमुच्येत कथं सम्पदिति स्मृतम् ।
यमान्तकृत् किमर्थेन किन्तत् प्रज्ञान्तकृत्त[4]था ॥१३॥
पद्मान्तकृत्कथं नाम कथं विघ्नान्तकृत्त[5]था ।
समन्त[6]चर्येति किं ज्ञेयं मन्त्रचर्येति किं तथा ॥१४॥
जपमित्यत्र किं ज्ञेयं किमामुद्रणमुच्यते ।
धर्मोदयं कथं भाव्यं सम्बरं कीदृशं तथा ॥१५॥
द्वेषमोहमहारागैः सत्त्वार्थं कुरुते कथम् ।
मण्डलेति किमुच्येत मुद्रान्यासं कथं भवेत् ॥१६॥
पुष्पमित्यत्र किं ज्ञेयं चैत्यं चेति किमुच्यते ।
ज्ञानचक्रं कथं ज्ञेयं पदमत्र किमुच्यते ॥१७॥
चोदनं च कथं नाथाः प्रेरणं च कथं भवेत् ।
आमन्त्रणं कथं तेषां बन्धनं कथमत्र वै ॥१८॥

---

१. ASB & RASB °षितो° । २. ASB गुह्यतन्त्र, CU गुह्येह्यत्र । ३. ASB & RASB तन्त्र । ४. RASB °कं । ५. RASB °कं । ६. ASB & RASB सर्वंमन्त्र° । ७. ASB °द्वे° ।

अभिषेकं कथं देयं कथं विद्याव्रतं तथा ।
पञ्चामृतं कथं भक्ष्यं पञ्चवीर्यं कथं तथा ॥१९॥
[1]कीदृशं सिद्धिसामान्यमुत्तमं कीदृशं तथा ।
उपायाः कतिविधास्तत्र उपेयः[2] कीदृशस्तथा ॥२०॥
कथमाज्ञां प्रयच्छन्ति योगिनः सर्ववज्रिणाम् ।
कथं कुर्वन्ति नानात्वं[3] तत्सर्वं कथयाशु च[4] ॥२१॥

अथ ते सर्वतथागतास्तेषां बोधिसत्त्वानां महासत्त्वानां प्रश्नवाक्यमुपश्रुत्य मुहूर्तं महाबोधिसत्त्वं महावज्रधरं[5] मालम्ब्य तूष्णीमभूवन् । अथ ते—

सर्वे महाबोधिसत्त्वाः प्रहृष्टाः करुणात्मनः ।
सम्बुद्धान् सुगतान् नाथान् प्रचोदन्ति[6] पुनः पुनः ॥२२॥

अथ ते सर्वतथागतास्तान् [7]बोधिसत्त्वानेवमाहुः ।

कायवाक्चित्तवज्रेण कायवाक्चित्तवज्रिणः ।
सत्त्वार्थं[8] बोधिसत्त्वेन्द्राः[9] शृण्वन्तु प्रश्नविस्तरान्[10] ॥२३॥

अथ ते सर्वे महाबोधिसत्त्वास्तेषां सर्वतथागतानामनुग्रहवचनमुपगृह्य[11] महाबोधिसत्त्वस्य महावज्रधरस्य कायवाक्चित्तवज्रं स्वकायवाक्चित्तवज्रैरालम्ब्य[12] साधु साधु भगवन्तः साधु साधु सुगता[13] इति तूष्णीमभूवन् ।

[14]ततस्ते सर्वतथागता महाकरुणात्मानः सह्यालम्ब्याधितिष्ठन् तेषां महाबोधिसत्त्वानामेककण्ठेनैव तान् प्रश्नान्[15] निर्दिशन्ति स्म[16] ।

त्रिविधं कायवाक्चित्तं गुह्यमित्यभिधीयते ।
[17]समाजं मीलनं प्रोक्तं सर्वबुद्धाभिधानकम् ॥२४॥

---

१. BOI & CU omit this line. २. BOI & CU °उपायं । ३. BOI & CU समयं । ४. ASB & RASB कर्माग्रप्रसराणि च । ५. BOI & CU omit महावज्रधर° । ६. ASB °दयन्ति । ७. BOI & CU महाबो° । ८. BOI & CU समुच्चार्यं । ९. BOI °सेन्द्राः । १०. BOI & CU शृणु गुह्यमविस्तारम । ११. BOI & CU परमगुह्यवचनमुपश्रुत्य, RASB प्रगृह्य । १२. BOI & CU वज्रवाक्यैः साधुकारमददुः । १३. BOI & CU सर्वतथागता । १४. CU omits from ततः . . . . . . दश सप्त त्रयोदशन below. १५. BOI has instead सर्वे मिलित्वा एकमतेनैकस्वरेण । १६. BOI adds अथ ते सर्वतथागतास्तेषां बोधिसत्त्वानां महासत्त्वानां प्रश्नवाक्यमुपश्रुत्य मुहूर्तं महाबोधिसत्त्वं वज्रधरमालम्ब्य उवाच । १७. BOI omits this line.

पञ्चमं[1] नवमं चैव दश सप्त त्रयोदशम्[2] ।
बुद्धानां बोधिसत्त्वानां देशना साधनं महत् ॥२५॥
चतुर्थं षोडशं चैव अष्टमं द्वादशं तथा ।
आचार्यकर्मसामान्यं[3] सिद्धिश्च व्रतसम्बरम् ॥२६॥
अष्टमं च[4] द्वितीयं च दश पञ्च चतुर्दशम् ।
हठमनुरागणं चैव उपसाधनसम्बरम् ॥२७॥
सप्तमं च तृतीयं च दशैकादशपञ्चमम्[5] ।
सिद्धिक्षेत्रनिमित्तं च सेवासाधनसम्बरम्[6] ॥२८॥
सर्वतथागतकर्म निग्रहानुग्रहक्षमम् ।
दान्तदौर्दान्तसौम्यानां सत्त्वानामेव तारणम्[7] ॥२९॥
उत्पत्तिक्रमसम्बन्धं[8] सेवाक्रमविधिश्चतुः ॥
गुरूणां मन्त्रमार्गेण[9] शिष्याणां परिपाचनम् ॥३०॥
सुत्रतस्याभिषिक्तस्य सुशिष्यस्य महात्मनः ।
बुद्धानां बोधिसत्त्वानां देशना परिमोचना ॥३१॥
प्रज्ञोपायसमापत्तिर्योग इत्यभिधीयते ।
योनिस्वभावतः[10] प्रज्ञा उपायो भावलक्षणम् ॥३२॥
प्रबन्धं तन्त्रमाख्यातं तत् प्रबन्धं त्रिधा भवेत् ।
आधारः प्रकृतिश्चैव असंहार्य्यप्रभेदतः ॥३३॥
प्रकृतिश्चाकृतेर्हेतुरसंहार्यफलं तथा ।
आधारस्तदुपायश्च त्रिभिस्तन्त्रार्थसंग्रहः ॥३४॥
पञ्चकं त्रिकुलं चैव स्वभावैकशतं कुलम्[11] ।
सहोक्तिर्बोधिवज्रस्य सोत्तरं तन्त्रमिष्यते ॥३५॥
तत्त्वं पञ्चकुलं प्रोक्तं त्रिकुलं गुह्यमुच्यते ।
अधिदेवो रहस्यं च परमं शतधा कुलम् ॥३६॥

---

१. BOI अष्टमं । २. BOI दशमं तत्र षोडशं । ३. BOI वर्णनं नाम, CU वर्णसामन्यं । ४. BOI सप्तमं, CU षष्ठं चैव । ५. BOI & CU सेवासाधनमुत्तममैं । ६. ASB सत्व° । ७. ASB & RASB °मवतारणा । ८. BOI क्रमशं चैव । ९. ASB मामन्त्र्य । १०. BOI & CU याभिः सन्तिष्ठते । ११. CU °वैकं कुलं तथा ।

अनादिनिधनं शान्तं भावाभावाक्षयं विभुम् ।
शून्यताकरुणाभिन्नं बोधिचित्तमिति स्मृतम् ॥३७॥
कायवाक्चित्तवज्रेणं[1] भेद्याभेद्यस्वभावतः[2] ।
विद्यया सह संयुक्तो विद्यापुरुष उच्यते ॥३८॥
पञ्च हेतिश्च वेतिश्च[3] वज्रमित्यभिधीयते ।
धारणं धृगिति ख्यातं विज्ञानं वज्रधृङ्मनः ॥३९॥
सदसन्मध्यमं ख्यातं भूतभौतिकसम्भवम् ।
विग्रहः सर्वसत्त्वानां जिनजिग्जननं जिनः ॥४०॥
चित्तं रत्नमिति ख्यातमर्थैः सर्वैः समुद्भवम् ।
वेदकेन ध्रुवं वेद्यं वेदना रत्नधृङ्मनः ॥४१॥
लक्ष्यलक्षणभावैस्तु सर्वं सर्वेण सर्वतः ।
रमणं लक्षणं लक्ष्यमारोलिगिति कथ्यते ॥४२॥
प्रकर्षकृतविज्ञानं यत् तत् प्रज्ञेति[4] भण्यते ।
संस्कारचेतनां धार्यं प्रज्ञाधृगिति कथ्यते ॥४३॥
कुलमन्वयमाख्यातमन्वयै[5]रादिरुच्यते ।
अविनाशमनुत्पन्नं यन्नामं[6] तत् प्रकथ्यते ॥४४॥
विज्ञानं द्वेषमाख्यातं देति[7] वेति द्वयैर्द्विषाम् ।
रूपं मोहमिति ख्यातं जडबन्धस्वभावतः ॥४५॥
वेदना घट्टमानाख्या अहङ्कारस्वभावतः ।
संज्ञा संरागमात्मानं वस्तुतः शक्तिलक्षणम् ॥४६॥
संस्कारस्तु सदा ईर्ष्या प्रतीत्य प्रेरणात्मनाम् ।
स्वभावं बोधिचित्तं तु सर्वत्र भवसम्भवम् ॥४७॥
कामं चित्तमिति प्रोक्तं रागद्वेषतमोऽन्वितम् ।
समयं विश्वसङ्काशाभिमुखं कर्मजं फलम् ॥४८॥
अद्वयज्ञानधर्मेर्ष्या[8]ऽहङ्कारो मोह उच्यते ।
अन्योन्यघट्टनं तत्र द्वेष इत्यभिधीयते ॥४९॥

---

१. BOI °वज्राणां । २. ASB & BOI भेद्यतेयं स्वभावतः । ३. ASB चे° । ४. BOI °कृति । ५. BOI & CU °यमा° । ६. BOI & CU °थं । ७. ASB हेति, CU देहि । ८. BOI °धर्मेष्व° ।

लक्षणं राग[1]मासक्तिः ज्ञानोऽयं वज्रमुच्यते।
रतिरत्यन्तसंभोगं सम्पदः स्त्रीसुखं परम् ॥५०॥
मोहो द्वेषस्तथा रागः सदा वज्रे रतिः[2] स्थिता।
उपायस्तेन बुद्धानां वज्रयानमिति स्मृतम् ॥५१॥
अविनाशात्मका धर्मा अनुत्पादस्वभावतः।
समयः सर्वभावानां तेनैवान्तककृद्यमः ॥५२॥
अविज्ञानात्मका धर्माः परमार्थवि[3]शुद्धितः।
समयः सर्वचित्तानां तेन प्रज्ञान्तकृज्जिनः ॥५३॥
अवाच्यात्मका धर्मा अभाव[4]नामरूपधीः।
समयः सर्वधर्माणां तेन पद्मान्तकृद्विभुः ॥५४॥
निर्विकल्पात्मका धर्माः प्रकृत्या शान्तभावतः
समयः सर्ववज्रा[5]णां तेन विघ्नान्तकृत् प्रभुः ॥५५॥
अविनाशमविज्ञेयमवाच्यमविकल्पितम्।
बुद्धबोधिरिदं ज्ञानं ज्ञात्वा सुखमवाप्नुते ॥५६॥
मोहो मोहोपभोगेन क्षयमोहो यमान्तकृत्।
काया[6]न्तकृद्भवेत्तेन तथा[7] ज्ञेयान्तकृद्भवेत् ॥५७॥
दोषो दोषोपभोगेन क्षयदोषः प्रज्ञान्तकृत्।
चित्तान्तकृद्भवेत्तेन तथा क्लेशान्तकृद्भवेत् ॥५८॥
रागो रागोपभोगेन क्षयरागः पद्मान्तकृत्।
वागन्तकृद्भवेत्तेन समापत्त्यन्तकृत्तथा ॥५९॥
सर्वक्लेशक्षयं यत्तत्सर्वकर्मक्षयन्तथा।
सर्वावरणक्षयं ज्ञानं विघ्नान्तकृदिति स्मृतम् ॥६०॥
क्लेशवज्रावृते शुद्धे सर्वं कर्म विशुध्यते।
सर्वकर्मविशुद्धत्वात् विशुद्धं कर्मजं फलम् ॥६१॥
ग्रहणं रागणं चैव आकारनिश्चलं तथा।
हेतुत्वञ्च फलत्वञ्च षड्भिश्चित्तसमुद्भवः ॥६२॥

---

१. RASB °समा। २. BOI & CU °त्वरति। ३. CU °क्षर°।
४. ASB धर्मोऽभावः। ५. CU °धर्मां°। ६. ASB & BOI स्कन्धा°।
७. RASB न ते, CU तेन। ८. RASB विघ्ना°।

टक्किराजादयः षट्काः क्रोधेन्द्रा इति विश्रुताः ।
भूतभौतिकविख्याता विद्याराज्ञेति विश्रुताः ॥६३॥
रूपवज्रादयः षट्का वज्राधिपतयः स्मृताः ।
समयवज्रादयः षट्काः पृथिव्यादिषु पञ्चकाः ॥६४॥
चित्तवाक्कायवज्रैस्तु[1] सम्भवन्ति महात्मनः ।
प्रज्ञोपायोद्भवं स्कन्धधात्वायतनविग्रहम् ॥६५॥
निश्चित्य योगतो मन्त्री निष्पन्नक्रमयोगतः ।
सर्वशुद्ध्यधिमोक्षेण सर्वसन्त्रासवर्जितः ॥६६॥
सिंहवद्विचरेन्मन्त्री निर्विशङ्केन चेतसा ।
नाकार्य्यं विद्यते ह्यत्र नाभक्ष्यं विद्यते तथा ॥६७॥
नावाच्यं विद्यते किञ्चिन्नाचिन्त्यं[2] विद्यते सदा ॥
असमाहितयोगेन नित्यमेव समाहितः ॥६८॥
सर्वचित्तेषु या चर्या समन्तचर्येति[3] कथ्यते ॥
प्रतीत्योत्पद्यते यद्यदिन्द्रियैर्विषयैर्मनः[4] ॥६९॥
तन्मनो मननं[5] ख्यातं कारकं[6] त्राणनार्थतः ॥
लोकाचारविनिर्मुक्तं यदुक्तं समयसम्वरम् ॥७०॥
पालनं सर्व[7] वज्रैस्तु मन्त्रचर्येति कथ्यते ॥
स्वकस्वकस्वभावन्तु विचार्य मनसा हृदि ॥७१॥
जपं तु सृष्टिसंहारं मन्त्रमुच्चार्य भेदतः ॥
विश्ववज्रात्मकान् बुद्धान् ज्ञानबीजेन संहरेत् ॥७२॥
बोधिनैरात्म्यबीजेन निरात्मां भावयेद्व्रती ॥
संस्फरेद् विश्ववद्विश्वं त्र्यध्वबीजेन तं जपेत् ॥७३॥
जपं जल्पनमाख्यातं सर्ववाङ्मन्त्रमुच्यते ॥
मन्त्रं मन्त्रमिति प्रोक्तं तत्त्वं चोदनं[9] भाषणम् ॥७४॥

---

१. ASB चित्तं च कायवाग्वज्रैः । २. BOI °नि° । ३. BOI & RASB मन्त्रचर्येति । ४. CU °न° । ५. BOI & CU मनोमतं । ६. BOI & CU तकारं । ७. BOI समय° । ८. ASB घार° । ९. ASB तद् वाक्य° ।

यथैव हृद्यधिष्ठानं समाधिं च तथैव च ।
तेषां मूर्ध्न्यभिषेकं च[1] तथा पूजां च सर्वतः ॥७५॥

विद्यया विद्यते योगं यस्य वज्र[2]धरस्य च ।
तस्य भोगाश्चतुर्ज्ञेयाः स्वाधिष्ठानादिभिस्तथा ॥७६॥

वीराणामेकवक्त्राणा[3]मेकैकं मूर्ध्नि सेचनम् ।
हृन्मुद्रा मन्त्रमार्गे[4]ण मुद्रयते स्वकुलक्रमैः ॥७७॥

फलेन हेतुमामुद्रय फलमामुद्रय हेतुना ।
विभाव्यमन्यथा सिद्धिः कल्पकोटिर्न जायते ॥७८॥

चतुर्भोगसमायुक्तं विद्यापुरुषवज्रिणम्[5] ।
कायवाक्चित्तभेदेन त्रिकोणेषु विभावयेत् ॥७९॥

दशारं चक्रमापीतं तत्र मध्ये विभावयेत् ।
सर्वारेषु दशक्रोधान् दशज्ञानात्मकोद्भवान् ॥८०॥

भावयेन्निरोधचक्रे[6]ण निष्पन्नेनाग्रचारुणा[7] ।
वज्रज्वालं स्फरेन्मेघैर्भ्रमन्तं निश्चलोपमम् ॥८१॥

इति धर्मोदयज्ञानं प्रकृत्या निर्मलं शिवम् ।
भावितेन क्षणेनैव बुद्धचक्षुः प्रजायते ॥८२॥

क्रमद्वयमुपाश्रित्य वज्रिणां तत्र देशना ।
क्रम[8]मौत्पत्तिकं चैव क्रममौत्पन्नकं[9] तथा ॥८३॥

साधनं प्रतिपत्तिश्च समयसम्वरं तथा ।
सर्व[10] तद्विस्तरं पूर्वं भिद्यते क्रमभेदतः ॥८४॥

रूपशब्दादयः कामाः सुखदुःखोभयात्मकाः ।
जनयन्ति हृदये नित्यं रागद्वेषतमोद्भयम् ॥८५॥

रागे रागमयं[11] वज्रं वज्रवद्रत्नसम्भवम् ।
रत्नवज्जायते सम्यं कामास्ते समयोपमाः ॥८६॥

---

१. BOI °केण । २. BOI & CU चक्र° । ३. ASB °वक्त्राणां । ४. BOI & CU °त्रे° । ५. BOI & CU °णः । ६. BOI °वज्रेण, CU °वज्रिणो । ७. ASB रूपिणा । ८. BOI °शोत्° । ९. BOI °शोत्पत्तिकं । १०. ASB त्रि° । ११. BOI & CU °समं ।

[1]साकारं च निराकारं सर्वगं त्र्यक्षरात्मकम् ।
करणं हरणं चैव स्फारणं कुर्यात् स्वजापतः ॥८७॥
एवं द्वेषं च मोहं च निष्पाद्य भुवनत्रयम् ।
आमुद्र्य[2] गुह्यसंशुद्धमर्थं कुर्वन्ति वज्रिणः ॥८८॥
निष्पाद्य द्वेषचक्रं तु द्वेषयोगेन योगिनाम् ।
विदाह्य[3] क्रूरवज्रेण[4] संहरेद्ज्ञानवज्रिणः ॥८९॥
तांस्तु संस्फार्य संबोध्य[5] तद्वत्संहरणं पुनः ।
अभ्यसेद्योगमेवन्तु द्वेषवज्रः स्वयं भवेत् ॥९०॥
मारणं जीवनं चैव त्रैधातुकमशेषतः ।
करोति क्षणमात्रेण व्यक्तशक्तिर्न संशयः ॥९१॥
निष्पाद्य मोहचक्रं तु मोहयोगेन योगिना ।
भूषणाद्यानि यत्किञ्चित्तत्सर्वं चोदयेत्सदा ॥९२॥
मोहचित्तोदधिं भाव्यं[6] सर्वरत्नैः प्रपूरितम् ।
दानवर्षं प्रवर्षेत सर्वेषां मोहचक्रिणाम् ॥९३॥
प्रदानं हरणं चैव सर्वद्रव्यमशेषतः ।
करोति क्षणमात्रेण चित्तवज्रस्थिरेण वै ॥९४॥
निष्पाद्य रागचक्रं तु रागयोगेन योगिना ।
अपहृत्य सर्वदेवेभ्यः कामयेत्[7] कामयोगतः ॥९५॥
रतिप्रीतिसुखैर्हर्षैः कामक्रीडाविकुर्वितैः ।
प्रदातव्यं ततः पश्चा[8]देवेभ्यः सर्वचक्रिणा ॥९६॥
त्रैधातुकसमुत्पन्ना भार्या देवासुरा अपि ।
कामयन्ति क्षणेनैव मानुष्यः किं पुनः स्त्रियः ॥९७॥
मण्डलमभिषेकं च कर्माग्रप्रसराणि च ।
अनुष्ठानमधिष्ठानं सिद्धानां गतिरन्यथा ॥९८॥
भगं मण्डलमाख्यातं बोधिचित्तं च मण्डलम् ।
देहं मण्डलमित्युक्तं त्रिषु मण्डलकल्पना ॥९९॥

---

१. BOI आकरं निकरं चैव, CU आकारं च निकरं च । २. BOI & CU प्रमुद्रा । ३. ASB विघात्य । ४. BOI °योगेण । ५. ASB बोधेन । ६. ASB स्थाप्य । ७. ASB कार° । ८. BOI पश्चात् ।

मुद्रितं मुद्रया सर्वं स्कन्धायतनधातुना ।
तेन मुद्रा सदा न्यस्ता[1] मण्डलेति विनिर्दिशेत् ॥१००॥
अङ्कुशं दण्डशूलं[2] च खङ्गं कोणेषु विन्यसेत् ।
टक्किदण्डबलं बालं चक्रं सुम्भ[3]मघोदूर्ध्वतः १०१॥
विद्याराजादिवज्राणां मुद्रा षट्चक्रवर्तिनाम् ।
पृथिव्यादिषु सत्त्वानां मुद्रामण्डलकं स्वकम् ॥१०२॥
आदर्शं वीणां शङ्खं च पात्रं बिम्बपटांस्तथा ।
धर्मोदयाख्या मुद्रैषा वज्राधिपतिवज्रिणाम् ॥१०३॥
बुद्धाश्च बोधिसत्त्वाश्च क्रोधराजाभिमुद्रिताः ।
ततोऽन्या एकवीरास्तु कुलवर्णेन कल्पिताः ॥१०४॥
पुष्पमित्यभिधीयन्ते नवयोषित्खधातवः ।
कायवाक्चित्तभेदेन न्यासं कुर्यात् कुलक्रमैः ॥१०५॥
चैत्यं च सर्वबुद्धानामालयस्थानमुच्यते ।
ज्ञानसत्त्वेन यत्सृष्टं[4] ज्ञानचक्रमिति स्मृतम् ॥१०६॥
बीजाक्षरपदं प्रोक्तं त्रिवज्राक्षरमक्षरम् ।
चोदनं बोधनं प्रोक्तं कायवाक्चित्तभावतः[5] ॥१०७॥
प्रेरणं रश्मिसञ्चारं दशदिग्लोकधातुषु ।
आमन्त्रणं सवज्राणां सर्ववज्रनिमन्त्रणम् ॥१०८॥
रश्मिना सर्ववज्राणां सर्ववज्राणि तत्पदे ।
संहृत्य पिण्डरूपेण बन्धो[6] बन्धनमुच्यते ॥१०९॥
कायवाक्चित्तवज्रेण कायवाक्चित्तमण्डले ।
आमुद्र्य कायवाक्चित्तं कल्पयेल्लेख्यं[7] मण्डलम् ॥११०॥
अभिषेकं त्रिधा भेदमस्मिन्तन्त्रे प्रकल्पितम् ।
कलशाभिषेकं प्रथमं द्वितीयं गुह्याभिषेकतः ॥१११॥
प्रज्ञाज्ञानं तृतीयं तु चतुर्थं तत्पुनस्तथा ।
मन्त्रयोग्यां विशालाक्षीं सं[8]पुष्पां शुक्रसम्भवाम् ११२॥

---

१. BOI °भ्यस्ता । २. CU रूपं । ३. BOI & CU शब्द° । ४. ASB पुष्ठं । ५. BOI & CU °तत्त्वतः । ६. BOI वज्र° । ७. ASB °ल° । ८. RASB सु° ।

[1]साकारं च निराकारं सर्वगं त्र्यक्षरात्मकम् ।
करणं हरणं चैव स्फारणं कुर्यात् स्वजापतः ॥८७॥
एवं द्वेषं च मोहं च निष्पाद्य भुवनत्रयम् ।
आमुद्र्य[2] गुह्यसंशुद्धमर्थं कुर्वन्ति वज्रिणः ॥८८॥
निष्पाद्य द्वेषचक्रं तु द्वेषयोगेन योगिनाम् ।
विदार्य[3] क्रूरवज्रेण[4] संहरेद्ज्ञानवज्रिणः ॥८९॥
तांस्तु संस्फार्य संबोध्य[5] तद्वत्संहरणं पुनः ।
अभ्यसेद्योगमेवन्तु द्वेषवज्रः स्वयं भवेत् ॥९०॥
मारणं जीवनं चैव त्रैधातुकमशेषतः ।
करोति क्षणमात्रेण व्यक्तशक्तिर्न संशयः ॥९१॥
निष्पाद्य मोहचक्रं तु मोहयोगेन योगिना ।
भूषणाद्यानि यत्किञ्चित्तत्सर्वं च्चोदयेत्सदा ॥९२॥
मोहचित्तोदधिं भाव्यं[6] सर्वरत्नैः प्रपूरितम् ।
दानवर्षं प्रवर्षेत सर्वेषां मोहचक्रिणाम् ॥९३॥
प्रदानं हरणं चैव सर्वद्रव्यमशेषतः ।
करोति क्षणमात्रेण चित्तवज्रस्थिरेण वै ॥९४॥
निष्पाद्य रागचक्रं तु रागयोगेन योगिना ।
अपहृत्य सर्वदेवेभ्यः कामयेत्[7] कामयोगतः ॥९५॥
रतिप्रीतिसुखैर्हर्षैः कामक्रीडाविकुर्वितैः ।
प्रदातव्यं ततः पञ्च[8]देवेभ्यः सर्वचक्रिणा ॥९६॥
त्रैधातुकसमुत्पन्ना भार्या देवासुरा अपि ।
कामयन्ति क्षणेनैव मानुष्यः किं पुनः स्त्रियः ॥९७॥
मण्डलमभिषेकं च कर्माग्रप्रसराणि च ।
अनुष्ठानमधिष्ठानं सिद्धानां गतिरन्यथा ॥९८॥
भगं मण्डलमाख्यातं बोधिचित्तं च मण्डलम् ।
देहं मण्डलमित्युक्तं त्रिषु मण्डलकल्पना ॥९९॥

---

१. BOI आकरं निकरं चैव, CU आकारं च निकरं च । २. BOI & CU अमुद्रा । ३. ASB विघात्य । ४. BOI °योगेण । ५. ASB बोधेन । ६. ASB स्थाप्य । ७. ASB कार° । ८. BOI पश्चाद् ।

मुद्रितं मुद्रया सर्वं स्कन्धायतनधातुना ।
तेन मुद्रा सदा न्यस्ता[1] मण्डलेति विनिर्दिशेत् ॥१००॥
अङ्कुशं दण्डशूलं[2] च खड्गं कोणेषु विन्यसेत् ।
टक्किदण्डबलं बालं चक्रं सुम्भँमधोदूर्ध्वतः १०१॥
विद्याराजादिवज्राणां मुद्रा षट्चक्रवर्तिनाम् ।
पृथिव्यादिषु सत्त्वानां मुद्रामण्डलकं स्वकम् ॥१०२॥
आदर्शं वीणां शङ्खं च पात्रं बिम्बपटांस्तथा ।
धर्मोदयाख्या मुद्रैषा वज्राधिपतिवज्रिणाम् ॥१०३॥
बुद्धाश्च बोधिसत्त्वाश्च क्रोधराजाभिमुद्रिताः ।
ततोऽन्या एकवीरास्तु कुलवर्णेन कल्पिताः ॥१०४॥
पुष्पमित्यभिधीयन्ते नवयोषित्खधातवः ।
कायवाक्चित्तभेदेन न्यासं कुर्यात् कुलक्रमैः ॥१०५॥
चैत्यं च सर्वबुद्धानामालयस्थानमुच्यते ।
ज्ञानसत्त्वेन यत्स्पृष्टं[4] ज्ञानचक्रमिति स्मृतम् ॥१०६॥
बीजाक्षरपदं प्रोक्तं त्रिवज्राक्षरमक्षरम् ।
चोदनं बोधनं प्रोक्तं कायवाक्चित्तभावतः ॥१०७॥
प्रेरणं रश्मिसञ्चारं दशदिग्लोकधातुषु ।
आमन्त्रणं सवज्राणां सर्ववज्रनिमन्त्रणम् ॥१०८॥
रश्मिना सर्ववज्राणां सर्ववज्राणि तत्पदे ।
संहृत्य पिण्डरूपेण बन्धो[6] बन्धनमुच्यते ॥१०९॥
कायवाक्चित्तवज्रेण कायवाक्चित्तमण्डले ।
आमुद्र्य कायवाक्चित्तं कल्पयेल्लेख्यँमण्डलम् ॥११०॥
अभिषेकं त्रिधा भेदमस्मिन्तन्त्रे प्रकल्पितम् ।
कलशाभिषेकं प्रथमं द्वितीयं गुह्याभिषेकतः ॥१११॥
प्रज्ञाज्ञानं तृतीयं तु चतुर्थं तत्पुनस्तथा ।
मन्त्रयोग्यां विशालाक्षीं सँपुष्पां शुक्रसम्भवाम् ११२॥

१. BOI °भ्यस्ता । २. CU रूपं । ३. BOI & CU शम्ब° । ४. ASB पुष्ठं । ५. BOI & CU °तत्त्वतः । ६. BOI वध्य° । ७. ASB °ख° । ८. RASB सु° ।

गुह्यगुह्याभिषेकं तु दद्याच्छिष्यस्य[1] मन्त्रिणः ।
खधातुमध्यगतं कृत्वा विण्मूत्रमज्जसंयुतम् ॥११३॥
वज्रपद्मप्रयोगेण सर्ववज्रान् समार्जयेत्[2] ।
सर्वांस्तान् हृदये पात्य कायवाक्चित्तवज्रतः ॥११४॥
उत्सृज्य वज्रमार्गेण शिष्यवक्त्रे[3] निपातयेत् ।
इदन्तत्सर्ववज्राणामभिषेकपदं परम्[4] ॥११५॥
सिद्ध्यन्ति सर्वमन्त्राणि कर्माग्रप्रसराणि च ।
अतिश्रद्धां[5] महाप्राज्ञीं सुरूपां साधकप्रियाम् ॥११६॥
एकयोगक्रियाभ्यस्तां समयीं[6] समपश्यं वै ।
दक्षिणा च[7] प्रदातव्या गुरवे साधकेन वै ॥११७॥
अध्येष्य गुरुणा तस्य दातव्या साधकस्य तु ।
मूढे मोहात्मकं योगं मोहरत्यां[8] समन्वितम् ॥११८॥
निःसेकां[9]न्मोहधाराभिर्मोहवज्रः स्वयं भवेत् ।
द्विष्टे द्वेषात्मकं योगं द्वेषरत्या समन्वितम् ॥११९॥
निःसेकं[10]द्द्वेषधाराभिर्द्वेषवज्रः स्वयं भवेत् ।
रक्ते रागात्मकं योगं रागरत्या समन्वितम् ॥१२०॥
निःसेकाद्रागधाराभी रागवज्रः स्वयं भवेत् ।
प्रज्ञाज्ञानात्मकं योगं वज्ररत्या समन्वितम् ॥१२१॥
निःसेकाद् ज्ञानधाराभिः प्रज्ञाज्ञानः स्वयं भवेत् ।
तामेव देवतां विद्यां गृह्य शिष्य[11]स्य वज्रिणः ॥१२२॥
पाणौ पाणिः प्रदातव्यः साक्षीकृत्य तथागतान् ।
हस्तं दत्त्वा शिरे शिष्यं[12] मुच्यते गुरुवज्रिणा ॥१२३॥
नान्योपायेन बुद्धत्वं तस्माद् विद्यामिमां वराम् ।
अद्वयाः सर्वधर्मास्तु द्वयभावेन लक्षिताः ॥१२४॥

---

१. RASB °ष्ये । २. RASB °वज्रसमो । ३. CU वजू । ४. BOI °वरं पदम् । ५. BOI °श्रद्धां, RASB श्राद्धो । ६. ASB omits. ७. ASB, BOI & CU °य । ८. ASB & RASB °त्कां । ९. BOI °शो° । १०. BOI °शेषा° । ११. ASB, BOI & CU गुह्याभिषेक° । १२. BOI शिष्यशिरसि ।

तस्माद् वियोगः संसारे न कार्यो भवता सदा ।
इदं तत्सर्वबुद्धानां विद्याव्रतमनुत्तमम् ॥१२५॥

अतिक्रमति यो मूढः सिद्धिस्तस्य न चोत्तमा[1] ।
प्रकृत्या देहधर्मेषु भ्राजते मलपञ्चकम् ॥१२६॥

पञ्चज्ञानैरधिष्ठानात्पञ्चामृतमिति स्मृतम् ।
ज्वा[2]लनं तापनं चैवोद्योतनं रूपदर्शनम् ॥१२७॥

मन्त्रमूर्तिप्रयोगेण भक्षेत्पञ्चामृतामृतम् ।
अन्तरिक्षगतं चिन्ते[3]द्वज्रहूङ्कारसम्भवम् ॥१२८॥

[4]अधस्तात्तु तत्र भागे पद्म[5]माकार[6]सम्भवम् ।
ॐकाराङ्कितममृतं[7] तत्र मध्ये निवेशयेत् ॥१२९॥

वज्रपद्मसमायोगाज्ज्वाल्य[8] सन्ताप्य[9] योगिना ।
उद्यते[10] स्फटिकाकारं ज्ञानसूर्यमिवापरम् ॥१३०॥

आकृष्य परमास्त्रेण दशदिग्लोकधातुषु ।
अमृतं तत्र सम्पात्य[11] भक्षेद् भक्षणयोगतः ॥१३१॥

पञ्चवीर्यं तथा भक्ष्यं साध्यसिद्धिविधानतः ।
निष्पाद्यत्र्यक्षरैर्बीजैरन्यथा नैव सिद्धिदाः ॥१३२॥

अन्तर्द्धानादयः सिद्धाः सामान्या इति कीर्तिताः ।
सिद्धिरुत्तममित्याहुर्बुद्धा बुद्धत्वसाधनम्[12] ॥१३३॥

चतुर्विधमुपायन्तु बोधिवज्रेण वर्णितम् ।
योगतन्त्रेषु सर्वेषु शस्यते[13] योगिना सदा ॥१३४॥

सेवाविधानं प्रथमं द्वितीयमुपसाधनम् ।
साधनं तु तृतीयं वै महासाधनं चतुर्थकम् ॥१३५॥

---

१. BOI तथो° । २. BOI ज्व° । ३. CU & RASB° वज्र°, BOI ध्येयं । ४. ASB & BOI omit this line. ५. CU° त्तत्र भावेन । ६. CU पद्मा° । ७. BOI, CU & RASB° नमृतात् । ८. RASB ज्ञानं, BOI & CU ज्वाल° । ९. ASB सन्ताप°, RASB सन्तुष्य । १०. ASB & CU उद्योत° । ११. ASB °प्राप्य, CU °योज्य, BOI °पाद्य । १२. ASB °भावनं । १३. BOI चाख्यातं सम्पात°, CU वा ख्यातं संख्या ते ।

सामान्योत्तमभेदेन सेवा तु द्विविधा[१] भवेत् ।
वज्रचतुष्केण सामान्यमुत्तमं ज्ञानामृतेन च ॥१३६॥
प्रथमं शून्यताबोधिं द्वितीयं बीजसंहृतम् ।
तृतीयं बिम्बनिष्पत्तिश्चतुर्थं न्यासमक्षरम् ॥१३७॥
[२]एभिर्वज्रचतुष्केण सेवासामान्यसाधनम् ।
उत्तमे ज्ञानामृते चैव कार्यं योगषडङ्गतः ॥१३८॥
सेवाषडङ्गयोगेन[३] कृत्वा साधनमुत्तमम् ।
साधयदेन्यथा नैव जायते सिद्धिरुत्तमा ॥१३९॥
प्रत्याहारस्तथा ध्यानं प्राणायामोऽथ धारणा[४] ।
अनुस्मृतिः समाधिश्च षडङ्गो योग उच्यते ॥१४०॥
दशानामिन्द्रियाणान्तु स्ववृत्तिस्थानान्तु[५] सर्वतः ।
प्रत्याहारमिति प्रोक्तमाहार प्रतिपत्तये[६] ॥१४१॥
पञ्चकामाः समासेन पञ्चबुद्धप्रयोगतः ।
कल्पनं[७] ध्यानमुच्येत तद्ध्यानं पञ्चधा भवेत् ॥१४२॥
वितर्कं च विचारं च प्रीतिश्चैव सुखं तथा ।
चित्तस्यैकाग्रता चैव पञ्चैते ध्यानसंग्रहाः १४३॥
गुह्यतन्त्रेषु सर्वेषु विविधाः परिकीर्तिताः ।
गुह्यं तर्कोदयं तर्कं विचारं तत् प्रयोगतः[८] ॥१४४॥
तृतीयं प्रीतिसङ्काशं चतुर्थं सुखसंग्रहम् ।
स्वचित्तं पञ्चमं ज्ञेयं ज्ञानं ज्ञेयो[९]दयक्षमम् ॥१४५॥
सर्वबुद्धमयं शान्तं सर्वकामप्रतिष्ठितम् ।
पञ्चज्ञानमयं श्वासं[१०] पञ्चभूतस्वभावकम् ॥१४६॥
निश्चार्य पिण्डरूपेण नासिकाग्रे तु कल्पयेत् ।
पञ्चवर्णं महारत्नं प्राणायाममिति स्मृतम् ॥१४७॥

---

१. ASB, BOI & CU चतुर्विधा° । २. This and the next line are omitted in BOI & CU-GOS. ३. BOI षड्भिरेभिः सेवायोगैः । ४. BOI & CU °णम् । ५. RASB स्पृशन्तु तिष्ठन्तु । ६. ASB कामाहारं प्रति-प्रति । ७. CU °ना । ८. RASB प्रभागता । ९. CU ज्ञेयं ज्ञानो° । १०. RASB त्रासं ।

स्वमन्त्रं हृदये ध्यात्वा प्राणबिन्दुगतं न्यसेत् ।
निरुध्य चेन्द्रियं रत्नं धारयन् धारणा स्मृतम् ॥१४८॥
निरोधवज्रगते चित्ते निमित्तमुपजायते ।
पञ्चधा तु निमित्तं तद् बोधिवज्रेण भाषितम् ॥१४९॥
प्रथमं मरीचिकाकारं धूम्राकारं द्वितीयकम् ।
तृतीयं खद्योताकारं[1] चतुर्थं दीपवज्ज्वलम् ॥१५०॥
पञ्चमं तु सदालोकं निरभ्रं[2] गगनसन्निभम् ।
स्थिरन्तु वज्रमार्गेण स्फारयीत खधातुषु ॥१५१॥
विभाव्य यदनुस्मृत्या तदाकारन्तु संस्मरेत् ।
अनुस्मृतिरिति ज्ञेया प्रतिभासोऽत्र जायते ॥१५२॥
प्रज्ञोपायसमापत्त्या सर्वभावान् समासतः ।
संहृत्य पिण्डयोगेन त्रिम्बमध्ये विभावनम् ॥१५३॥
झटिति ज्ञाननिष्पत्तिः समाधिरिति संज्ञितः ।
प्रत्याहारं समासा[3]द्य सर्वमन्त्रैरधिष्ठ्यते ॥१५४॥
ध्यानज्ञानं समापद्य पञ्चाभिज्ञत्वमाप्नुयात् ।
प्राणायामेन नियतं बोधिसत्त्वैरधिष्ठ्यते[4] ॥१५५॥
धारणानु[5]बलान्नित्यं वज्रसत्त्वः समाविशेत् ।
अनुस्मृतिसमायोगात्प्रभामण्डल जायते ॥१५६॥
समाधिवसितामात्रे निरावरणवान्भवेत् ।
तच्चित्तं हृदये लक्ष्य [6]चतुर्वज्रप्रयोगतः ॥१५७॥
आकृष्य परमास्त्रेण चित्तं मन्त्रमयीकृतम् ।
मन्त्रमूर्तिप्रयोगेण बोधिगाथामुदाहरेत् ॥१५८॥
खमण्डलसमारूढं बोधिं[7] संयोगभावनैः ।
तच्चित्तं ज्ञानबिम्बेन भावनमुपसाधनम् ॥१५९॥
दर्शनं च द्विधा यावत् तावत् षण्मासभावनम् ।
सर्वकामोपभोगैस्तु कर्तव्यं सर्वतः सदा ॥१६०॥

---

१. ASB, BOI & CU °तका° । २. RASB नियतं, BOI निरतं । [३.] ASB °प° । ४. ASB, BOI & CU °निरीक्ष्यते । ५. BOI, CU ASB °न्तु । ६. ASB, BOI & CU चन्द्रव° । ७. BOI & CU विवि° ।

दर्शनं यदि षण्मासैर्यदुक्तं नैव जायते ।
आरभेत त्रिभिर्वारैर्यथोक्तविधिसम्भवैः[१] ॥१६१॥
दर्शनं तु कृतेऽप्येवं साधकस्य न जायते ।
यदा न सिद्धयते बोधिर्हठयोगेन साधयेत् ॥१६२॥
ज्ञानसिद्धिस्तदा तस्य[२] योगेनैवोपजायते ।
कुलभेदप्रयोगेण वज्रकीलेन कीलयेत् ॥१६३॥
वशीकरणरक्षां च ततः कुर्यात्प्रयोगतः ।
महारागनयेनैव संहृत्य ज्ञानचक्रिणम्[३] ॥१६४॥
योषितं स्फार्य नवभ्रा साध्याया विग्रहे न्यसेत् ।
परिवर्त्य चतुर्मुद्रां मण्डलं तत्र कल्पयेत् ॥१६५॥
आत्ममध्यगतं कृत्वा संहरेत्सर्वचक्रिणम्[४] ।
सर्ववज्रमयं कृत्वा तदा बोधिं विभावयेत् ॥१६६॥
चतुर्भिश्चोदनागीतैर्देवीभिश्चोदिते[५] हृदि ।
त्र्यध्ववज्रमयं चिन्तेद्[६] ज्ञानवद्देहभावनम् ॥१६७॥
मदेन भिद्यते वर्णं रसेन हृदयं तथा ।
स्वहेतुरभिषेकेण फलमाधारभेदतः ॥१६८॥
मन्त्रेण भिद्यते चर्म[७] विद्यापि धर्ममुद्रया ।
षट्चक्रवर्तिनो राज्ञ उष्णीषाच्च विनिःसृता ॥१६९॥
विद्या राज्ञीति विख्याता चतुर्भोगा महर्धिका ।
सर्वकामेति विज्ञेया वज्राधिपतयस्तथा ॥१७०॥
ध्यानवज्रेण सर्वेषामभिषेकः प्रशस्यते ।
अनेन विधियोगेन ज्ञानेन सह विग्रहम् ॥१७१॥
कायवाक्चित्तवज्रेणाद्वयीकरणसाधनम् ।
पूर्वोक्तेनानुसारेण विद्यापुरुषवज्रिणः ॥१७२॥
आत्मवन्मण्डलसृष्टिर्महासाधनमुच्यते ।
सेवाकाले महोष्णीषं बिम्बमालम्ब्य योगतः ॥१७३॥

---

१. BOI °सम्भवैः । २. BOI & CU तस्यावश्यमे° । ३. RASB °वज्रि° । ४. RASB °वज्रि° । ५. RASB °ति चोदते । ६. RASB चित्तं । ७. RASB च° । ८. BOI° ण वशी° ।

उपसाधनकाले तु बिम्बममृतकुण्डलम् ।
साधने देवतायोगं कुर्यान्मन्त्री विधानवित्[१] ॥१७४॥
महासाधनकाले च बिम्बं बुद्धाधिपं विभुम् ।
इदं तत् सर्ववज्राणां[२] रहस्यं परमयोगिनाम् ॥१७५॥
इति बुद्ध्वा विभागेन साधयेत्सिद्धिमुत्तमाम् ।
अन्यथा नैव संसिद्धिर्जायते उत्तमं शिवम् ॥१७६॥
कल्पकोटिसहस्रेऽपि बुद्धानामपि तायिनाम् ।
साध्यसाधनसंयोगं यत्तत् सेवेति भण्यते ॥१७७॥
वज्रपद्मसमायोगमुपसाधनमुच्यते ।
साधनं चालनं प्रोक्तं हूँ फट्कारसमन्वितम् ॥१७८॥
खभावं खमुखं शान्तं महासाधनमुच्यते ।
सर्वबुद्धाधिपः श्रीमान् महावज्रधरैः[३] पदम् ॥१७९॥
उपेयः सर्वबुद्धानां धर्माणां सैव धर्मता ।
यद्यत्कर्मानुरूपेण[४] योगमालम्ब्य[५] योगिनः ॥१८०॥
निष्पाद्य मण्डलं तत्र श्रावयेत्समयदारुणम् ।
समयं रक्षयेत्पूर्वं कायवाक्चित्तवज्रिणः ॥१८१॥
अथवोष्णीषसमयी[६] यथोक्तविधिसम्भवैः[७] ।
तत्तत्[८] कर्मानुरूपेण स्वैं[९]चक्राज्ञां तु दीयते ॥१८२॥
साध्यम[१०]स्यापि यद्देहं मण्डलेन विभावयेत् ।
अपरं[११] श्रावयेत्तस्य तेषां देहस्थचक्रिणाम्[१२] ॥१८३॥
तस्य पातं ततः कृत्वा निष्क्रान्तान् प्रविभावयेत् ।
आकृष्य सर्वभावेन स्वचक्रे[१३] तान् प्रवेशयेत् ॥१८४॥
कृत्वा प्रतिकृतिं तस्य यथोक्तद्रव्यसम्भवैः ।
लिङ्गमाक्रम्य पादेन क्रोधाविष्टेन चेतसा ॥१८५॥

---

१. ASB °तः । २. BOI & CU बुद्धानां । ३. RASB °धरो, BOI & CU °धरी° । ४. RASB संसारेण । ५. RASB °लभ्य । ६. BOI °यै: । ७. BOI° भावनैः । ८. ASB तत्त्व° । ९. ASB & RASB स° । १०. RASB साधक° । ११. BOI °राधं । १२. RASB °वज्रिणा । १३. RASB °ण ।

गृहीताज्ञान्[1] ततः क्रोधान् नानाभीतगणैर्वृतान् ।
प्रेषयेत्[2] घातनार्थाय साध्यसाधकवज्रिणः ॥१८६॥
बन्धितं ताडितं तेन क्रोधराजेन वेष्टितम् ।
सन्तप्तं त्रास सम्भूतं साध्यमाकर्षयेत्ततः ॥१८७॥
पातयेत्प्रतिकृतौ तस्य त्रिवज्रस्य तु मन्त्रिणः ।
कीलयेत्कीलमन्त्रेण मूर्ध्नि कण्ठे तथा हृदि ॥१८८॥
ईतिश्चोपद्रवान् रोगान्[3] नानाविषसमुद्भवान् ।
निपात्य तत्र बिम्बेषु तेषामपि सुकीलयेत् ॥१८९॥
ततः सर्वप्रयोगेण[4] यथोक्तविधिसम्भवैः ।
यन्त्र मन्त्रप्रयोगादीन् योजयेत्कर्मभेदतः ॥१९०॥
जपं वा[5] लिङ्गमाक्रम्य होमं वा क्रोधमण्डले ।
ध्यानं वा क्रूरसत्त्वैस्तु खाद्यमानं प्रकल्पयेत् ॥१९१॥
शान्तिके शान्तचित्तं तु पौष्टिके पुष्टिमानसम्[6] ।
वश्ये रक्तं मनः कृत्वा क्रोधे क्रुद्धं[7] प्रसाधयेत् ॥इति॥१९२॥

अथ भगवन्तः सर्वतथागतास्तेषां बोधिसत्त्वानां महासत्त्वानां संशयच्छेदं[8] कृत्वा सर्वसंशयच्छेत्तारं कायवाक्चित्तवज्रं[9] स्वकायवाक्चित्तवज्रेषु विहरन्तं स्वकायवाक्चित्ते-नालम्ब्य तूष्णीमवस्थिता अभूवन् ।

अथ ते सर्वे बोधिसत्त्वा महासत्त्वास्तान्सर्वतथागतान् अनेन स्तोत्रराजेन स्तुवन्ति स्म ।

नमस्ते सर्वकायेभ्यः सर्ववाग्भ्यो नमो नमः ।
[10]नमस्ते सर्वचित्तेभ्यः सत्त्वहृद्भ्यो नमो नमः ॥१९३॥
कायवाक्चित्तवज्राणां कायवाक्चित्तभावतः[11] ।
सत्त्वासमसमा बुद्धाः कः साध्यः कश्च साधकः ॥१९४॥
सर्वबुद्धविघातेन साधकस्य[12] महात्मनः ।
कथं न लिप्यते पापैर्यदि लिप्तः फलं कथम् ॥१९५॥

---

१. RASB °त्वा तु । २. CU घाट°, BOI घोत° । ३. ASB & RASB °नागा° । ४. BOI & CU ततः सर्वत्र योगेषु । ५. CU स्व° । ६. BOI & CU पुष्ट° । ७. ASB, BOI & CU क्रोधान् क्रूरान् । ८. RASB °त्तारं । ९. ASB °व्रजं । १०. CU omits this line. ११. BOI & CU °लाभतः । १२. ASB & CU °केन्द्रं, RASB °केन्द्रो ।

